# "वादावलीभेदोज्जीवनविमर्शः"

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीय
विद्यावारिधिः (पी-एच० डी०) इत्युपाधये प्रस्तुतः

शोधप्रबन्धः




निर्देशकः
डॉ० पं० श्रीपारसनाथ द्विवेदी
आचार्य एवं दर्शनसंकायाध्यक्षः
वेदान्त विभागे

अनुसन्धाता
देवेन्द्रनाथ दीक्षितः
वेदान्त विभागे

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय
वाराणसी-2

दीपावली
वि० सम्वत् २०४९ ]

[ सन् १९९२ ई०

# "वादावलीभेदोज्जीवनविमर्शः"

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीय
विद्यावारिधिः (पी-एच० डी०) इत्युपाधये प्रस्तुतः

## शोधप्रबन्धः




*निर्देशकः*
**डॉ० पं० श्रीपारसनाथ द्विवेदी**
आचार्य एवं दर्शनसंकायाध्यक्षः
वेदान्त विभागे

*अनुसन्धाता*
**देवेन्द्रनाथ दीक्षितः**
वेदान्त विभागे

**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय**
**वाराणसी-2**

दीपावली
वि० सम्वत् २०४९ ]

[ सन् १९९२ ई०

## प्रमाण-पत्रम्

आयुष्मता श्रीदेवेन्द्रनाथ दीक्षितेन निबद्धं प्रस्तुतं वादावलीमेदोज्जीवनविमर्शः नामानं शोधप्रबन्धम् अहमपाठिषम् । अत्र शोधप्रबन्धे नवीन तथ्यानि विषय सम्बद्धानि आविष्कृतानि सन्ति । सिद्धान्तानां तथ्यानान्च प्रतिपादनं नवाभिरुपपत्तिभिः कृतमस्ति । अस्य भाषा शैली च सुगमा सन्तोषजनकास्ति। अयं शोधप्रबन्धः विद्यावारिधि(पी-एच्०डी०) इत्युपाधियोग्यः प्रकाशनार्हश्च इति प्रमाणयति ।

पारसनाथ द्विवेदी

(पारसनाथ द्विवेदी)
आचार्यः
वेदान्तविभागे
दर्शनसकायाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालय
वाराणसी।

१२-११-८२

दिनांकः --

डा० पारसनाथ द्विवेदी
आचार्य, (वेदान्त विभाग)
सं. सं विश्वविद्यालय
वाराणसी

संस्कृत
देवस्वरूपमिश्र
२४-११-८२

# भूमिका

अथ वादावली भेदोज्जीवनविमर्शाख्यस्य शोध प्रबन्धस्य भूमिका प्रस्तूयते । अनया भूमिकया ग्रन्थस्य तत् कर्तुश्च तत्सिद्धान्तानाश्च विषये प्रकाशो भविष्यति । मध्ववेदान्तविषयकोऽयं शोध प्रबन्धः ।प्रसिद्धश्च मध्वाचार्यमतं द्वैतवादरूपं संक्षेपेणात्रो ल्लिख्यते ।

मध्वमतसारः :---

माध्वाः खलु विशिष्टाद्वैतिन इव प्रत्यक्षा नुमानशब्दरूप प्रमाणत्रय वादिनः । प्रमेय निरूपणेऽपि तत्सादृश्यं बहुलमस्ति वैसादृश्यमपि तथास्ति। पदार्थाद्विविधाः स्वतन्त्रोऽस्वतन्त्रश्च स्वतन्त्रः परमेश्वरः अस्वतन्त्रस्तदतिरिक्तः। तत्र ईश्वरो विष्णुः निर्दोषोऽनन्तकल्याणगुणाकरः सृष्टिस्थितिसंहारनियमन ज्ञानाज्ञान बन्धमोक्षरूप कार्याष्टककर्ता सविशेषः सर्वव्यापी ज्ञानानन्दरूपःभजनीयो द्रष्टव्यो जिज्ञास्यः निरवधिकोऽनन्याधीनः । एवमादिगुणविशिष्टः।

तदधीना तद्भिन्ना तद्भार्या लक्ष्मीः तद्वदेव नित्यमुक्ता कालतो देशतो व्यापिनी च । परमात्मनः किञ्चिदूनत्वात् न सर्वगुणपूर्णता अस्याम् । सेयं जीवकोट्यनन्तर्भूता प्रकृत्यभिमानिनी । संसारिणो जीवाः ।संसारिता चानादितयैवा ज्ञानादि दोषयुक्तत्वात् । इमे जीवा परमात्मनोऽत्यन्तं भिन्नाः अनन्ताः त्रिविधाः मुक्तियोग्याःनित्यसंसारिणःतमो योग्याश्च ।तत्र देवादयो मुक्तियोग्याः,मनुष्याः मध्यमाःसुखदुःखनिमग्नाः नित्यसंसारिणःअधमा अज्ञानिनः तमो योग्याः ।

प्रकृति जडा, ईश: परमात्मा जीवश्चेति प्रमाणामत्यन्तं भेदोऽस्ति । प्रकृतिरपि परस्परमत्यन्तं भिन्ना जीवा अपि परस्परमत्यन्तं भिन्ना: । अतो भेदवादिन इमे माध्वा द्वैतवादिन उच्यन्ते ।

मध्वमते प्रकृतिवत् अव्याकृताकाशोऽपि कश्चित् चैतन्यात्मक मोक्ष स्थानातिरिक्तो जडपदार्थोऽस्ति । स भूताकाशभिन्न: सृष्टौ प्रलये चैकरूपो निर्विकार: प्राच्यादिदिग्रूप एको नित्य: सर्वव्यापी ।

परमात्मा विष्णु: आदौ सृष्टिकाले प्रकृतित: गुणत्रयशब्द वाच्यानि सत्त्वरजस्तमांसि द्रव्याणि विभज्य महदादिसृष्टिमारभते । महदहंकारतत्वे स्त: । बुद्धिमन इन्द्रियाणि प्राकृत तत्त्वरूपाणि अन्यरूपाणि चेत्युभयविधानि स्वीकृतानि । बुद्धि र्ज्ञानम् । मन इन्द्रियाणि च नित्यानि ईश लक्ष्मी सर्वजीव स्वरूपभूतानि साक्षिपद वाच्यानि । अनित्यानि च बद्धानाम् । साक्षिस्वरूपस्येन्द्रियस्य आत्मा मन: तद्धर्मा: सुखदु:खादय: अविद्या काल: अव्याकृताकाशश्च साक्षात् विषया:, शब्दादयो बाह्येन्द्रिय द्वारा विषया: । शब्दा वर्णात्मकाअनादयो नित्या विभव उच्चारणाद्यभिव्यङ्ग्या ।

काल: प्रकृत्युपादानक: क्षण लवाद्यनेक रूप: । परमात्मा प्रतिबिम्बत्वमपि तद्व्यतिरिक्तेषु सर्वेषु चेतनेषु स्वीक्रियते । सर्वे जीवाश्चेतना अणुपरिमाणा: । मुक्तावपि अणुत्वमेव तेषाम् । महत्त्व व्यवहारस्तु अणिमाद्यैश्वर्य निमित्तक: प्रतिवस्तु विभिन्नो विशेष: कश्चित् पदार्थ: स्वीक्रियते । स एव भेदतन्मूलसर्वव्यवहारनिर्वाहक: ।

यथोक्तम् ब्रह्मतर्कग्रन्थे ---

ईशो लक्ष्मी जडा जीवा:,भिन्ना एव तथा मिथ: ।
जडानां भेद एवैवं जीवानामपि निश्चित: ॥
प्रत्यक्षमनुमानञ्च वाक्यञ्चेति त्रिधा मतम्
चेतनञ्च जडञ्चेति द्विविधं त्विन्द्रियं मतम्
चेतनं त्विन्द्रियं ह्यात्मस्वरूपा न्नापरंस्मृतम्
मुक्तानां चेतनं त्वेव बद्धाना मुभयं तथा
विष्णोरेवस्वरूपाणां तद्गुणानां तथैव च
तस्यैक शिर आदीनां नैव भेदोऽस्ति कश्चन
अभेदेऽपि विशेषेण व्यवहार: पृथक् भवेत्
विष्णो: क्रियाश्च या: काश्चित् तदभेदोऽप्यदाक्ष: ।
एवं लक्ष्म्याश्च मुक्तानां स्वरूपे:स्वगुणै रपि
एव क्रियाभिस्तथैवैक्यं नित्यं स्वावयवैरपि
भेदाभेदस्तु बद्धानां गुणै: स्वै:कर्मभिस्तथा
अंशांशिनो: गुणस्यापि गुणिन: कर्म तद्वतो
कार्योपादानयोश्चैव व्यक्तिसामान्ययो रपि
भेदाभेदौ न तु क्वापि विष्णोरस्ति कदाचन:
भेद एवहि जीवाधे: केवलाभेद आत्मना
तत्क्रियाणां न नाशोऽस्ति तन्मुक्ते:पूर्व कालत:
एवं मुक्त क्रिया नित्या नान्यथा भ्रान्ति सम्भवात्

भ्रान्तिज्ञान यथार्थज्ञानयो र्मध्ये यथार्थज्ञानस्य स्वरूपात्मकत्वेऽपि भ्रान्तिज्ञानस्यान्त: करण परिणामत्वम् । चैतन्यस्वरूपा: सर्वे आत्मान: ।एवञ्च तस्यैव चैतन्यस्य विषय ग्राहकत्वसम्भवात् धर्म्यतिरिक्तं ज्ञानं नास्ति ।भ्रान्तिज्ञानायान्त:करण परिणामस्य वहिरप्रसृतस्यैव तस्य विषयेण विषय विषयिभाव-सम्बन्ध: ।

मुक्तिश्चास्यमते स्वरूपानन्दाभिव्यक्ति: । जीवस्वरूपेषु स्त्री-पुरुषभेदोऽप्यस्ति ।पुंजातीयानां संसृतौ अनियतं शरीरम् ।मुक्तौ पुंशरीरमेव । स्त्री जीवानां संसृतौ स्त्रीशरीरत्वमेव मुक्तावपि स्त्रीशरीरमेव ।एवमानन्दस्वरूपे ज्ञानादौ तारतम्यस्य स्वाभाविकस्य सत्त्वात् मुक्तौ तारतम्यं सिद्धम् ।केषाञ्चिदुपासकानाम् अपराधात् मुक्तौ स्वरूपानन्दह्रास: सचेश्वराधीन: ।

एवंस्वानुभवेन सह ब्रह्मसालोक्य सामीप्यसारूप्य सायुज्येषु यथार्हमाप्त्या भोगचातुर्विध्यमपि भवति । सर्वे जीवा परमात्मन: शेषभूतास्तत् किंकरा: ।

एवमत्र संग्रह:---

पदार्था:दश -- द्रव्यगुणकर्म सामान्य विशेष विशिष्टांशि शक्ति सादृश्याभावा:।
द्रव्याणि विंशति: -- विष्णु लक्ष्मी जीवा व्याकृताकाशप्रकृति गुण (सत्त्वरजस्तमा:)महत्तत्त्वाहंकारबुद्धिमन इन्द्रिय मात्रा भूत ब्रह्माण्डाविद्या वर्णान्धकार वासना कालप्रतिबिम्बरूपाणि ।

मुक्तिश्चतुर्विधा -- कर्मलय: ,उत्क्रान्ति: अर्चिरादिगति भोगश्च ।भोगोऽपि चतुर्विध: सालोक्यसामीप्यसारूप्य सायुज्यभेदात् ।

मध्वसम्प्रदाय: :---

इदानीं मध्वसम्प्रदाये किञ्चित् प्रस्तूयते मध्वमतं ब्रह्मसम्प्रदाय:,द्वैतवाद इत्यादिनाम्ना प्रसिद्धम् । प्रथमं वायुदेवेनाधिगतं ततो हनुमता प्राप्तं ततो भीमेना-

धिगतम् एवं परम्परया आनन्दतीर्थेनाधिगतम् । आनन्दतीर्थस्यैव मध्व इति
पूर्णबोध इति इत्यपि प्रसिद्धानि नामानि प्रसिद्धानि।
पूर्ण, दाक्षिणात्योऽयं , उडुपीति प्रसिद्ध स्थानस्य समीपे अस्य मध्वाचार्यस्य ११९९ ईशवीये जन्मासीत् तथा १३०३ ईशवीयेऽस्य तिरोभावो बभूव स च भारते वर्षे प्रसिद्धेषु तीर्थ स्थलेषु पर्यटन् स्वमतं प्रचारयामास । अनेक च ग्रन्थाः आचार्येण पादेन विरचिता तेषु प्रसिद्धतमा ब्रह्मसूत्रभाष्यम् ,तदनुव्याख्यानम्,अणु भाष्यम,उपनिषद्-भाष्यम्,गीताभाष्यम् भागवततात्पर्य निर्णयः,महाभारततात्पर्यनिर्णयः, गीता-तात्पर्य निर्णयः तन्त्रसारसंग्रह इत्यादयः ।इमे आचार्याः विशिष्टा विद्वांस आसन् इत्यत्र न संदेहलेशोऽपि ।

श्रीमतो मध्वाचार्यस्य शिष्यः अक्षोभ्यतीर्थः तच्छिष्यः श्रीजयतीर्थः अस्य समयः १३८८ ईशवीयःकालःस्वीक्रियते अनेन मध्वभाष्येषु महत्त्वपूर्णा टीका विरचिताः । अतः टीकाचार्य इति नाम्नाऽयं प्रसिद्धः । अस्यविद्वत्तास्य द्वौ ग्रन्थौ प्रसिद्धतरौ ब्रह्मसूत्रानुव्याख्यानस्य मध्वविरचितस्य व्याख्या "न्यायसुधा" प्रथमः ,द्वितीयश्च चित्सुखी ग्रन्थखण्डनात्मको मौलिकः "वादावली" ग्रन्थः ।अस्य महावैदुष्यस्य परवर्ती आचार्याः व्यासतीर्थः भूरिशः प्रशशंस यथोक्तम् ---

चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः
गुरुभावं व्यञ्जयन्ती भाति श्री जयतीर्थवाक् ।।

अध्यैत आचार्यस्य परम कृतिभिः मध्वमतं दर्शनश्रेणीषु स्थानं मुख्यं प्राप्नोत् । अयं महाराष्ट्रदेशीयः श्रीरघुनाथदेशपुत्रः "मङ्गलवेढे" ग्रामवास्तव्यः आसीत् । सन्यासात्पूर्वः बाल्ये धोन्डोपन्त रघुनाथ इति नाम्ना प्रसिद्धः । बाल्ये क्रीडाप्रिय अस्ति । अक्षोभ्यतीर्थः अस्मै दीक्षां दत्तवान् ततो जयतीर्थ इति नाम्ना प्रसिद्धः ।

वादावली :---

अस्य विद्यावाग्वैदग्धी पूर्णस्याचार्यस्य श्री जयतीर्थस्य प्रसिद्धतमा कृति वादावली ग्रन्थवैशिष्ट्यं अतीतोऽधिकं भजते । विलक्षण शैल्या अकाट्ययुक्तिभि रुपपत्तिभिः प्रमाणैः दर्शनपद्धतिप्रसिद्ध भजते । दर्शनवाग्युद्धे महारथी अयमद्वैतमत सिद्धान्तं प्रबलयुक्तिभिर्विघूनयन् स्वमतश्च स्थापयन् विजयतेतराम् अस्मिन् ग्रन्थे - मुख्यतया मायाखण्डनं विश्वमिथ्यात्वखण्डनं तत् सत्यत्वस्थापनं विश्वसत्यत्व प्रतिपादकश्रुति विचारः, भेदसत्यत्वप्रतिपादनमनुमाने वाक्येन च भेदानां पञ्च विधानां सत्यत्वोपपादनञ्चैतत् कृतमस्ति । विष्णुरेव सविशेषः सर्वस्य जगत्सृष्टिस्थिति प्रलयकर्तास्ति । जीवः अणुः भिन्नोऽस्ति इत्यादि विषयाः प्रतिपक्षखण्डन पूर्वकं अत्र ग्रन्थे विवेचिताः । सर्वथा मध्वाचार्यानुमतसिद्धान्तस्य पूर्णप्रतिष्ठा अत्र ग्रन्थे कृतास्ति । प्रस्तुते शोधप्रबन्धे विमृष्टं समीक्षितं अस्माभि र्यथामति एतत् सर्वम् । ईशजीवयोर्भेदः ईशजडयोर्भेदः, जीवानां परस्परं भेदः, जीवजडयो भेदः जडयोश्च परस्परं भेद इति भेद पञ्चकस्य प्रतिपादनमत्र ग्रन्थे प्रपञ्चो मिथ्या दृश्यत्वादित्याद्यद्वैतमतोपस्थापितानुमानानां खण्डनपूर्वकं विश्वं सत्यं प्रमाणासिद्धत्वात् आत्मवदित्याद्यनुमानैः विश्वसत्यत्वं श्रुतिवाक्यैश्च साधितम् । ग्रन्थाध्ययनेनैवास्य आचार्य पाण्डित्यं वैदुष्यश्चोत्कृष्टमवगतं भवति।

श्रीव्यासतीर्थः :----

वादावली ग्रन्थ प्रशंसकः श्रीजयतीर्थादनन्तरंमाविर्भूतं ज्योतिरिवं श्री व्यासतीर्थः मध्वसम्प्रदायमालामुख्यरत्नं बभूव । अस्य पाण्डित्यं वैदुष्यञ्च केनजानन्ति। अस्याविर्भावकाल ऐतिहासिकैः १४४७-१५३९ ईशवीयनिर्धारितः । विजयनगराधीशः श्रीमान् कृष्णदेवरायः विशेषत एनं संरदा । अनेन आचार्येण मैसूरे श्री"व्यासाय" नामको मठः स्थापिता यत्र तस्य परम्परा प्रचलति । अस्य ब्रह्मण्यतीर्थो दीक्षा गुरुः लक्ष्मीनारायणमुनिश्च विद्यागुरुरासीत् यथोक्तंतेनैव ---

ज्ञानवैराग्यभक्त्यादिकल्याणगुण शालिनः ।
लक्ष्मीनारायणमुनीन् वन्दे विद्यागुरून् मम ।।

अस्य कृतयः— न्यायामृतम्, तर्कताण्डवः । तात्पर्य चन्द्रिका, भेदोज्जीवनम्, मन्दारमञ्जरी, मायावादखण्डन टीका इत्यादयः सन्ति ।

ग्रन्थेषु प्रधानतां प्राप्तः न्यायामृत ग्रन्थोऽस्य महत्त्वपूर्ण अस्ति । वादावल्यनन्तरं मध्वमते अस्य महत् वैशिष्ट्यमस्ति । अत्र ग्रन्थे अद्वैतसम्मतं प्रायः सर्वसिद्धान्तस्य खण्डनमस्ति । मध्वसिद्धान्तस्य युक्तिभिः मण्डनमस्ति । अस्य ग्रन्थस्योपजीव्यग्रन्थौ वादावली शतदूषणी ग्रन्थौ स्तः । अद्वैतमतश्चात्र ग्रन्थे खण्डितप्रायमस्ति ।

एतं न्यायामृतग्रन्थमाश्रित्य श्रीमधुसूदन सरस्वतीभिरद्वैतमतसिद्धशारदैः महापण्डितैरखण्डितप्रतिमाविशेषैः अद्वैतसिद्धिनामा प्रसिद्धतमो ग्रन्थोऽकारि । तत्राद्वैतसिद्धौ न्यायामृतग्रन्थः सर्वथा खण्डितः न्यायामृतस्य महत्वसम्प्रदाये अतिमहत्त्वमस्ति ।

भेदोज्जीवनम् :----

अयमपि ग्रन्थः अस्य शोधप्रबन्धस्य विषयः । भेदानामुज्जीवनमित्यर्थेन संगतनामा ग्रन्थोऽयं पूर्वोक्तपञ्चविधं भेदं मद्वैत ग्राहग्रस्तं समुद्दधार । अनुमानेनागमेन च प्रबल प्रमाणेन भेदानामुज्जीवनं पुनः स्थापनामत्र कृतमस्ति । समीक्षितञ्चैतत् अत्र शोधप्रबन्धे मया । अस्य ग्रन्थस्य माध्वसम्प्रदाये महत्त्वमस्ति। वादावली ग्रन्थमनुसरन् प्रधानतया भेदान् एव श्रीमान् व्यासतीर्थ अत्र ग्रन्थे समालोचितवान् स्थापितवान् च ।

चितवान् स्थापितवान् च । श्रीमद्व्यासतीर्थादनन्तरं श्रीरघूत्तमतीर्थ:प्रसिद्धो विद्वान् बभूव । अनेनापि विष्णुतत्त्वनिर्णय,भावबोध ब्रह्मप्रकाशिकादि ग्रन्थान् विरच्य मध्वमतं परिपुष्टं कृतम् ।

एतदनन्तरं श्रीव नमाली मिश्र: प्रसिद्धो बभूव माथुर: गौरवान्वित:। अनेन मध्वमुखालङ्कार,न्यायमृतसौगन्ध्यतरङ्गिणपी सौरभादिग्रन्थान् विरचिता । एवमेवानेके विद्वद्भिर्भूषित: परिवर्धितश्चायं मध्वसम्प्रदायोऽविच्छिन्न पाण्डित्यपरम्परया समुन्नतिं प्राप्नोति । तदेतन्मध्वमतं संक्षिप्तं श्लोके --- श्रीमन्मध्वमते हरि: परतम: सत्यं जगत् तत्त्वतो । भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गता: ।।

मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम् -
अक्षादित्रितयं प्रमाण मखिलाम्नायैकवेद्यो हरि: ।।

।।इतिशम्।।

विदुषांवशंवद:

देवेन्द्रनाथ दीक्षित:
(दैवेन्द्रनाथदीक्षित:)

# कृतज्ञता ज्ञापनम्

परमश्रद्धेयानां प्रस्तुतस्य अस्य शोधप्रबन्धस्य निर्देशक महोदयाना-माकारणकरुणावरुणालयानां सर्वतन्त्रस्वतन्त्राणां वेदान्तव्याकरण ज्योतिषाद्यनेक शास्त्राध्यापने सदातत्पराणां विद्यावारिधि (पी-एच०डी०)एवं वाचस्पति (डी०लिट्०) इत्युपाधि द्वय समलङ्कृतानां सम्पूर्णानन्दसंस्कृत विश्वविद्यालये वेदान्तविभागे शाङ्करवेदान्ते आचार्यपदभाजाम् एवं दर्शन संकायाध्यक्षाणां अस्मद् गुरुवराणां डा० पारसनाथ द्विवेदि महाभागानामहं आजीवनं कृतज्ञोऽस्मि,यतः एतेषां निर्देशानुसारेणैव प्रस्तुतः शोधप्रबन्धः पूर्णतां गतः व्याकरण वेदान्तादिशास्त्राणि एतेभ्यःसम्यक् पठितानि मया एते महानुभावाः सर्वथा ममोपरिदयां कृत्वैव अस्यशोधप्रबन्धस्य निर्देशकत्वं स्वीकृतवन्त इति ।

अतः परं परम वन्दनीयानां विविध विद्या विशारदानां पण्डित प्रवराणां सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य कुलपतिवराणां गुरुकल्पानां डा० श्रीविद्यानिवासमिश्र महाभागानाम् आजीवनं कृतज्ञोऽस्मि,यत इमे महाभागा मम शोधप्रबन्धे समागतान् सर्वानप्यन्तरायान् दूरीकृत्य मम जीवनं सफलं कृतवन्त इति ।

अतः परं परमश्रद्धेयानां व्याकरणशास्त्रे सादात्याग्नि महर्षिकल्पानाम् अनवरत विद्याध्यवसायिनां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य व्याकरण विभागाध्यक्षचराणां विद्वन्मूर्धन्यानां संस्कृताकादमी द्वारा सम्मानितानां परमगुरूणां श्रीरामप्रसादत्रिपाठि महाभागानामाजीवनं कृतज्ञोऽस्मि ।यतः एतेषां आशीर्वचोभिः अयं प्रस्तुतःशोधप्रबन्धः सम्पन्नतां यात इति ।

परमश्रद्धेयानां सदाचारपूतानां पण्डितप्रवराणां सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य वेदान्तविभागे भूतपूर्व प्राध्यापकानां अस्मद् गुरुवराणां

श्री जगदीशनारायण पाठक महाभागानामहं कृतज्ञोऽस्मि, यतोऽहं एतेषां सन्निधौ स्थित्वा वैयाकरणसिद्धान्त कौमुदी प्रभृति ग्रन्थानामध्ययनमहमकार्षम् इति ।

अतः परं पण्डितप्रवराणां न्यायवेदान्तव्याकरण धर्मशास्त्रप्राचीन-राजशास्त्राद्यनेकशास्त्र पारंगतानां प्राचीनराजशास्त्रविभागाध्यक्षाणां विद्यावा-रिधि वाचस्पति(डी० लिट्०) इत्युपाधि द्वय विभूषितानां परमधीराणां डा० नरेन्द्रनाथशर्मणां गुरुवराणामहम् आजीवनं कृतज्ञोऽस्मि यत एभिर्महानुभावैः सर्वे वेदान्तग्रन्थाम् अहं पाठितः । ~~विद्वद्वरेण्यं~~

अतः परं परमादरणीयानां विद्वद्वराणां सम्पूर्णानन्दसंस्कृत-विश्वविद्यालये रामानुजवेदान्तस्य प्राध्यापक पदमलङ्कुर्वतां श्रीजयप्रकाशत्रिपाठि महाभागानां मम गुरुवराणां येषां कृपयैव सिद्धित्रयादि ग्रन्थाः मया सम्यग-धीताः, अतः तेषां महानुभावानां सर्वथा कृतज्ञोऽस्मि । अतः परं परमश्रद्धेयानां सदाध्ययनाध्यापन तत्पराणां श्रीरामचन्द्र जी श्रीरामगोयनका संस्कृतपाठशालायाः प्रधानाचार्याणां श्रीवासुदेव पाठक महाभागानां गुरुवराणां सन्निधौ लघुसिद्धा-न्तकौमुद्यादि ग्रन्थानामध्ययनं मया कृतम्, अतोऽहं एतेषामाजीवनं कृतज्ञोऽस्मि।

अतःपरं परमपूज्यानां व्याकरणवेदान्तादिशास्त्र सिन्धुपारंगतानां विद्याविनयसदाचारधर्मपरायणानाम् अध्यापनकौशललब्धानुत्तमकीर्तीनां सं०सं०विश्व-विद्यालये भूतपूर्वाचार्याणां विदुषां विद्वन्मण्डली प्रलब्धप्रतिष्ठानां तातपादानां श्रीश्यामनारायणदीक्षितानामाजीवनं कृतज्ञतामावहामि यैः विद्यादानमान स्नेह संरक्षणसंपोषणादिभिः वात्सल्यादहं परिवर्धितः ।

अतः परं परमादरणीयानां व्याकरणसाहित्यवेदान्ताद्यनेक शास्त्र पारंगतानां प्राच्यप्रतीच्योभयविध विद्यावतां सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य कुलपतिपदभाजां पद्म श्री रित्युपाधि विभूषितानां डा० वी० वेङ्कटाचलम् महा-भागानां आशीर्वचांसि काम्ये, प्रार्थये च यत् विद्यावारिधि (पी-एच्०डी०) इत्युपाधिं

प्रदाय मामनुगृहणन्तु भवन्त इति ।

अस्मिन् पुण्यकार्ये श्रीदयाशंकर त्रिपाठि महोदया: आशुलिपिका: (स्टैनो) अपि ममनिवेदनं श्रुत्वा अविलम्बेनैव टंकणकार्यं सम्पाद्य योगदानं कृतवन्त:, अतस्तेऽपि मम सर्वथा कृतज्ञताभाजनम् ।

अहं पुन: काशी विश्वेश्वरं साम्बं सर्वेषां महानुभावानां स्वस्य च मंगलाय अभ्युदयाय च प्रार्थये इति शम् ॥

विदुषां वशंवद:

१५-११-८२

देवेन्द्रनाथ दीक्षित:

(देवेन्द्रनाथ दीक्षित:)
शोधच्छात्र: वेदान्तविभागे
सम्पूर्णानन्द संस्कृत विश्वविद्यालये
वाराणस्याम्

## विषय-सूची

### अथ प्रथमोऽध्यायः 1-34



### अथ द्वितीयोऽध्यायः 35-65



### अथ तृतीयोऽध्यायः 66-110

:o:

## मङ्गलाचरणम्

वन्दे सरस्वतीं देवीं वीणां पुस्तकधारिणीम्

यत् कृपा लवमात्रेण नरो देवत्वमाप्नुयात् ॥१॥

हेरम्बलम्बोदरबुद्धि राशिम्

माङ्गल्यहेतुं वरदं गणेशम्

नमामि गौरी सुतमिन्दुभूषणम्

विघ्नेश्वरं सर्वसुराग्रपूज्यम् ॥२॥

इन्दीवरश्यामल गात्रमीशम्

सीतोत्या सार्धमपूर्व शोभम्

विराजमानं स्वजनैं नमामि

सिंहासने राघववंशकेतुम् ॥३॥

नमामि शम्भुं गिरिजा द्वितीयम्

विराजमानं भजतां सुचित्ते

काश्यां कृपासिन्धुममोघमद्भुम्

श्री विश्वनाथं विधिविष्णुसेव्यम् ॥४॥

जननीं फूलकुमारीं श्यामनारायणं तथा

पितरं करुणामूर्तिं वन्दे भक्त्या शतं नतः ॥५॥

गुरून् नत्वा तथा देवान् देवेन्द्रोऽहं यथामति

वादावल्यादि ग्रन्थस्य कुर्वे विमर्शनं मितम् ॥६॥

:o:o:o:

# प्रथमोऽध्याय:

## संक्षेपेणाद्वैतमतोपस्थानम्

प्रस्तुत वादावलीमेदोज्जीवनविषयकस्य शोध प्रबन्धस्य द्वैतप्रतिपादनपरस्य मुख्यतया अद्वैतमेव पूर्वं पक्षमूतं निरस्यमतस्तन्मतं प्रथमं प्रदर्शनीयम् ।

अद्वैतमतस्य समर्थक: प्रवर्तको वा शङ्कराचार्य एव प्रमुख: । शाङ्करे अद्वैतमते चर्चिता विषया: संक्षेपेणात्र प्रस्तूयन्ते । तत्र ब्रह्म सत्यं जगन्मिथ्या । इदं जगत्शुक्तौ रजतमिवाभासते । ब्रह्म निर्गुणमवाङ्मनस गोचरञ्च वर्तते । सर्वज्ञत्वादयो गुणा ब्रह्मणि औपाधिका एव सन्ति । जीवो ब्रह्मैव भापरस्तथापि अज्ञत्वात् भिन्न इवाभाति । मनोबुद्ध्याद्युपाधिभिस्सर्वोऽपि जन: अहमिति प्रत्येति । यथा सुषुप्तदशायां मनोबुद्ध्यादीनां लयेन अहङ्कारप्रतीत्यभाव: , तथैव मोक्षावस्थायामपि उपाधिलयात् अहमाकारप्रतीत्य भावो जायते । अतएव अहमिति प्रतीत्यभावो जायते । अतएव अहमिति प्रतीतिरौपाधिकी । वस्तुत: जीव एक एव वर्तते न तु नाना । अन्त:करणभेदाद्भिन्नस्य तस्य सुखदु:खानुभव भेदो भवति । चैतन्यं सर्वव्यापकं स एवात्मा इत्यभिधीयते । अयमात्मा ईश्वर -जीव साक्षीति भेदेन त्रिविधो वर्तते । सर्वजगन्मूलकारणमज्ञानम्, तस्मिन् चैतन्यान्तर्गते स आत्मा ईश्वर इत्यभिधीयते । स एव ईश्वरस्सत्वरजस्तमोभिर्ब्रह्मविष्णु -शङ्कराख्या लभते । आत्मा ज्ञानस्वरुपो न तु ज्ञातृस्वरूपो तस्य ज्ञातृत्वमहङ्काराद्युपाधिर्भवति । प्रपञ्चस्यापि ज्ञेयत्वमज्ञानादेव । सत्यत्वं त्रिविधं-प्रातिमासिकं ~~शुक्तिरजतादौ~~ व्यावहारिकं

पारमार्थिकन्चेति । ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीयमान त्वे सति ब्रह्मभिन्नत्वं व्यावहारिकत्वम् । ब्रह्मप्रमाति रिक्तबाध्यत्वं प्रतिभासमात्र-शरीरत्वं तुलाविधोपादान कत्वं प्रातिभासिकत्वम् । त्रिकालाबाधकत्वं पार मार्थिकत्वम् । तत्र प्रातिभासिकस्य शुक्तिरजतादेः व्यावहारिकसत्यरजतेन बाधो भवति । व्यावहारिक सत्यत्वं घटपटादीनां तच्च पारमार्थिकसत्येनब्रह्म-दर्शनेन बाध्यते । किन्तु ब्रह्मणः कस्यामपि अवस्थायां न बाधो भवति । अतएव तदेव ब्रह्म परमार्थसत् वर्तते । घटपदादीनां व्यवहार दशायां सत्यत्वम् । वस्तुतः ते स्वाप्निकपदार्थवत् मिथ्याभूताः सन्ति । यथा स्वप्नमताःपदार्थाः जाग्रदवस्थायां न सन्ति । अतस्ते मिथ्या तथा पारमार्थिक दशायामभावात्एते व्यवहारदशायां विद्यमाना अपि घटपटाद्यो मिथ्या एव पारमार्थिकत्मज्ञानेन तेषां बाधसंभवात् ।

श्रुतिषु कुत्रचिदाकाश क्रमेण सृष्टिः तेज आदिक्रमेण कुत्रचित्ब्र ब्रह्मैव नान्यदित्युक्तम् । सर्वासामपि श्रुतीनां अबाधितप्रामाण्यात् तत्समन्वायो-ऽवश्यमेव विधेयः । अतएव इदमेव सिध्यति यत् ब्रह्मैव सत्यमिति पारमार्थिक दृष्ट्या उक्तम् । वस्तुतः वस्तुतः आकारादिक्रम सृष्टिः व्यावहारिकी । अनेन प्रमाणेन जगतो व्यावहारिकत्वं न परमार्थसत्यत्वम् । यदि जगत् परमार्थसत् स्यात् तर्हि अन्यत्किमपि नास्तीति प्रतिपादिनी श्रुतिरनर्थिका स्यात् । एवन्च सत्यानृते मिथुनीकृत्य नैसर्गि कोऽयं लोकव्यवहार इति मन्तव्यम् ।अतएव अज्ञानि दृष्ट्या तत्सत्यत्वं भासते । ज्ञानिदृष्ट्या तस्यमिथ्यात्वम् । न केवलं सर्वस्य जगतो मिथ्यात्वं श्रुत्या बोध्यते अपितु स्वस्यापि मिथ्यात्वं श्रुतिः निरभिमान मानितया ब्रूते । अस्याखिलस्य जगतो मूलस्वरूपनाधविद्या । सा च त्रिगुणात्मिका।

प्रलयकालसमाप्ति वेलायां अविद्यया जीवकृतकर्मभिश्च तदैक्षत बहुस्यां प्रजायेय इति रीत्या परमात्मा संकल्पयति ,तत आकाशादिक्रमेण सृष्ट्युद्गमः ।ततः पंचीकृतमहाभूतेभ्यः शरीरादीनि प्रादुर्भवन्ति । एवमुत्पन्नशरीरे प्रविष्टं चैतन्य जीव इत्यभिधीयते । स च न अणुः किन्तु व्यापकः सर्वस्मिन् शरीरे सुखदुःखानुभवात् । स च जीवः मुक्तिपर्यन्तं स्थायी , जन्मान्तरीयकर्मज सुखदुःखसम्बन्धात् । जीवः विस्मृतकण्ठस्थचामीकरः पुरुष इवात्मविस्मृतेः ,अज्ञानात् सुखदुःखानुभवभाक् । अज्ञानं लिङ्ग शरीरम् , स्थूलशरीरं चेति उपाधिस्तस्य सदा प्रत्यासन्नः । अयमुपाधिः "दशमस्त्वमसि" इति ज्ञानेन विस्मृतात्मस्वरूपस्य अज्ञानमिव आत्मज्ञानेन जीवात्मपरमात्मैक्यज्ञानापरपर्यायेण नश्यति । सत्यज्ञानेन विना मिथ्याभूतदर्शनस्यानिवृत्तेः । एवं मविद्यानाशो जीवो मुक्तो भवति । तस्य ज्ञानाग्निः प्रारब्धेतरापि संचितक्रियमाणानि कर्माणि नाशयति । अस्यां दशायां प्रारब्धकर्माणि भुंजानः स विगतशरीराद्यभिमानो जीवन्मुक्त इत्यभिधीयते । प्रारब्ध कर्मावसाने देहपाते स विदेहमुक्तो भवति । इयमेव परमामुक्तिः । अस्यामवस्थायां जीवः परमात्मसायुज्यं नामरूपमधिगच्छति। न च मतान्तरवत् अल्पेनापि सेवकादिरूपेण भिन्नस्तिष्ठति । यद्यपि जीवस्सदा आत्मस्वरूप एव तथापि भावरूपेण ज्ञानेन आत्मानं सुखदुःखभाजं मनुते तदैव बद्ध-इत्यभिधीयते । तादृशाज्ञाननिवृत्तौ स एव मुक्त इत्युच्यते ।

वेदविहितकर्मभिश्चित्तशुद्धिः ततो ब्रह्मनिष्ठं गुरुं प्रति शरणगमनम् तेन तत्त्वमसीति ज्ञानोपदेशः , तच्छ्रवणमनननिदिध्यासनैः सन्यासाश्रमधिवसन् कर्माणि परित्यजन् स सुस्थिरज्ञानी मुक्तिं लभते मोक्षप्राप्त्यै ज्ञानमेव साक्षात्साधनम् । कर्मोपासने तु चित्तशुद्धिचित्तैकाग्र्यप्रापकात् परम्परित साधने ज्ञानकर्मसमुच्चयस्तु नेष्टः । नित्यानित्यवस्तु विवेकः इहामुत्रफलभोगविरागः,शमदमा-

दिषट्क सम्पत्ति: मुमुक्षुत्वञ्चेति साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा । अस्मिन् मते अनिर्वचनीयख्याति:,प्रत्यक्षानुमानोपमानशब्दार्थापत्त्युनुपलब्ध्याख्यानि षट्प्रमाणानि । अलौकिकेऽर्थे आत्मनि शाब्दमेव मुख्यं प्रमाणम् अन्यदनुमानादि तदवष्टम्भेन प्रमाणम् । एवं प्रकारेण अद्वैतवेदान्तस्य प्रमुखं वचनं ब्रह्म सत्यं जगन्मिथ्या "जीवो ब्रह्मैव नापर:" इति वर्तते ।

द्वैतमतम् :----

श्री मध्वाचार्य: द्वैतमतस्य प्रचार कृतवान् । जयतीर्थव्यासतीर्थ: विजयीन्द्र-वनमालीमिश्र प्रभृतय आचार्या: अस्य सम्प्रदायस्य परिपोषका अभवन् ।

माध्वसम्प्रदायानुसारं द्रव्य-गुण कर्म सामान्य विशेष-विशिष्ट अंशी शक्ति-सादृश्याभाव: दशपदार्था: स्वीकृता: सन्ति । अत्र विंशतिधा द्रव्यं स्वीकृतम् - परमात्मा -लक्ष्मी-जीवाव्याकृताकाश - प्रकृति-गुणत्रय-महत्त्वाहंकाराविद्या-वर्णान्धकार-वासना-काल-प्रतिबिम्बिता इति ।

अत्र चतुर्धाशक्ति: परिकल्पिताअचिन्त्यशक्ति:,आधेयशक्ति:, सहजशक्ति:,पदशक्तिश्चेति । अचिन्त्यशक्तेराश्रय: भगवान् विष्णुरेव ।

ईश्वर:साक्षाद्विष्णु: । तस्य अनन्तागुणा: निरतिशयानिरवधिकाश्च भवन्ति । स एक सन्नपि नानारूपधरोऽवतरति ।

माध्वानां परमात्मशक्तिरेव लक्ष्मी: । सा च सर्वथा परमात्माधीना सत्यपि ततो भिन्ना । उदारा च ऐतरेय माष्ये उक्तम् ---

लक्ष्मीरुदारा ह्यद्रुत्वात् उदारस्तत्परो हरि: ।

जीव: संसारी कर्मानुगुण्येन सुखदु:खोपभोक्ता, जननमरणशीलश्च । परमेश्वरानुग्रहमन्तरा जीव: साधारणमपि कर्मकर्तुं नेष्टे । अनुग्रहविशेषेण जीव: मुक्तिं लभते । अस्मिन् सम्प्रदाये जगत् तत्त्वत:सत्यं[1] वर्तते ।

श्रीवल्लभाचार्य-विट्ठलनाथ-कृष्णचन्द्रगिरिधराचार्य हरिदासाचार्य-प्रजानाथ भट्ट विज्ञानभिक्षु प्रभृतयो विद्वांसःशुद्धाद्वैतमतं प्रवर्तयामासु: । वल्लभाचार्याणां मते जीव: तिरोहितानन्दादिगुण: स्वयमीश्वर एव । स केवलं लीलाविलुलितमना एव तथात्वं प्रतिपद्यते यदृच्छया न जातु मायपोद्वेलित:।

मुक्तजीवस्य भगवत: सच्चिदानन्दान्नितान्तहोऽभेद: । संसारी जीव: पुष्टिमार्गावलम्बेन उपलब्धभगवदनुग्रह: पुन: तिरोहिता नन्दांशं प्रतिपद्यमान: सच्चिदानन्दगमवगाहते ।

---

१- श्रीमन्मध्वमते हरि: परतम: सत्यं जगत् तत्त्वतो भेदोज्जीवगणाहरेरनुचरा नीचोच्चभावं गता । मुक्तिनैजसुखानुभूतिरमला भक्तिश्च तत्साधनम् अक्षादि त्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरि: ।।

-माध्वसम्प्रदाय प्रकाश पृ० -१० ।।

जगद्विषये अस्मिन् सम्प्रदाये अविकृतपरिणामवाद एव अभ्युपगमः। सच्चिदानन्दात्मकं निर्गुणं ब्रह्मैव जगद्रूपेण परिणमति। वल्लभाचार्याणां मते जगतो नात्पत्तिर्न वा विनाशः अपितु आविर्भावतिरोभावौ भवतः।

आचार्याणामाचारमार्ग एव पुष्टिमार्ग उच्यते। पुष्टिशब्दश्चानुग्रहवचनः पोषण तदनुग्रहः। मुक्तिं प्रति विशेष कारणता चानुग्रहस्यैवेति।

अत्र द्विविधा द्विविधा भक्ति स्वीकृता मायादिभक्तिः पुष्टिभक्तिश्चेति। एवमेव प्रकारेण उत्तरमीमांसा शास्त्रस्यापि विभिन्ना सम्प्रदायाः सन्ति येषामतं ण खण्डन खण्डनाधे यथास्थलं प्रत्यक्षरूपेण अप्रत्यक्षतया च चर्चितं खण्डितं वा दृश्यते।

अद्वैतमते मिथ्यात्वोपपादनम् :-----

मिथ्यात्वं च यद्यपि नात्यन्तासत्त्वम्, अपसिद्धान्तात्। नापि अनिर्वाच्यत्वम्, अप्रसिद्धेः। नापि सद्विविक्तत्वम्, सतोऽपि सदन्तरविविक्तत्त्वात्। नापि सत्त्वानधिकरणत्वम्, निर्धर्मके ब्रह्मण्यपि सत्त्वात्। न च निर्धर्मकत्वादेव तत्र सत्त्वानधिकरणत्वमपि नेति वाच्यम्, निर्धर्मकत्वरूपहेतोः सत्त्वानधिकरणत्वाभावरूपस्य च भावाभावाभ्यां व्याघातेनाभावरूपधर्मनिषेधायोगात्। अन्यथाऽसत्त्वानधिकरणत्वस्यापि तत्राभावेन तद्व्यावृत्त्यर्थमनिर्वाच्यलक्षणे सत्त्वानधिकरणत्वरूपविशेषणायोगात्। न च प्रतीत्यविषयत्वं मिथ्यात्वम्, ब्रह्म तु वेदान्त जन्यवृत्तिव्याप्यमिति वाच्यम्, शुक्तिरूप्यादेरपि व्यवसायद्वारा अनुव्यवसायं प्रति साक्षाच्च बाधक ज्ञानं प्रति मिथ्यात्वनिषेध्यत्वेन विषयत्वात्। सत्त्वप्रकारकप्रमांप्रति साक्षादविषयत्वं चेद् आवश्यकत्वात् सत्त्वाभाव

एव मिथ्यात्वं स्यात् । नापि भ्रान्तिविषयत्वम् ब्रह्मणोऽप्यधिष्ठानत्वेन तद्विषयत्वात् भ्रान्तिमात्रविषयत्वस्य चोक्तरीत्या शुक्तिरूप्यादावप्यभावात् । अध्यस्ततया भ्रान्तिविषयत्वं चेद्, विशेष्य वैयर्थ्यात् । विशेषण मात्रस्य च निरूप्यमानमिथ्यात्वानतिरेकात् । नापि बाध्यत्वम् । तद्धि न तावदन्यथा विज्ञातस्य सम्यग्विज्ञातत्वम् । मिथ्यात्ववादिणकादिना विज्ञातस्य प्रपञ्चस्य सत्यत्वस्थायित्वादिना विज्ञातत्वेन सिद्धसाधनात् । नापि बाधकज्ञानविषयत्वम् , ब्रह्मणि अतिव्याप्तेः । नापि नास्ति नासीन्न भविष्यतीति बोध्यमानाभावप्रतियोगित्वेन तद्विषयत्वम्,मन्मते ह्यापणस्थरूप्यस्यैव तत्प्रतियोगित्वात् । नापि ज्ञाननिवर्त्यत्वम्, उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविव सत्त्वेप्युपपत्तेः । नापि स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्, अव्याप्यवृत्तिसंयोगादेरिव सत्त्वेप्युपपत्तेः । नाप्यव्याप्यवृत्तित्वानाश्रयस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, आरोपितस्य संयोगस्याऽत्यन्ताभावप्रतियोगित्वम्, आरोपितस्य संयोगस्याऽत्यन्ताभावस्तु अनारोपितस्य संयोगस्याऽत्यन्ताभावस्तु अनारोपितस्य संयोगस्यात्यन्ताभावादन्य एव व्याप्यवृत्तिरिति वाच्यम्, शुक्तिरूप्यादौ तदभावादित्युक्तत्वाद् । नाप्यविद्यातत्कार्ययोरन्यतरत्वम्, अनादौ जीवब्रह्मविभागादावव्याप्तेः । परमतेऽज्ञानस्य तत्कार्यभ्रान्त्यादेश्च सत्यत्वेनार्थान्तरत्वाच्च । शुक्तिरूप्यादौ तदभावादित्युक्तत्वाद्। नाप्यविद्यातत्कार्ययोरन्यतरत्वम्,अनादौ जीवब्रह्मविभागादावव्याप्तेः ।परमतेऽज्ञानस्य तत्कार्यभ्रान्त्यादेश्च सत्यत्वेनार्थान्तरत्वाच्च । शुक्तिरूप्यादायनिर्वाच्याविद्याकार्यत्वस्य प्रतिवाद्यसंमतेश्च ।

तथापि मिथ्याशब्दोऽनिर्वाच्यवचन इति पञ्चपादिकारीत्या सदसत्त्वानधिकरणत्वरूपानिर्वाच्यत्वं मिथ्यात्वम् , ॥

यद्वा बाध्यत्वमनिर्वाच्यत्वम् । तच्च शुक्तिरूप्यादिरेव पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगीति मते प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वत्वम् उक्तं हि विवरणे :----

" प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्य "
इति उक्तञ्च वार्तिके :----

तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः ।
अविद्यासहकार्येण नासीदस्ति भविष्यति ।।

।।बृह०वा०पृ०६६।।

प्रतिपन्नत्वं च न प्रमितत्वं येन विरोधः,नापि भ्रान्तिप्रतिपन्नत्वम् , येन सिद्धसाधनम्,किन्तु प्रतीतत्वमात्रम् । सर्वस्मिश्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं विवक्षितम् । सत्त्वपदे रजतत्वं प्रतिपन्नोपाधौ शुक्तौ निषिध्यमानमपि रजतं न निषिध्यत इति न सिद्धसाधनम् ।।२।।

मतान्तरे तु बाध्यत्वं ज्ञानत्वेन ज्ञाननिवर्त्यत्वम् । उक्तं हि विवरणे" अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः" इति । अनुमिति प्रति मनसो मनस्त्वेन हेतुत्वेऽपीन्द्रियत्वेनाहेतुत्ववत् पूर्वज्ञानादिकं प्रति उत्तरस्य ज्ञानेच्छादेरात्मविशेषगुणत्वेन निवर्तकत्वेऽपि ज्ञानत्वेनानिवर्तकत्वात् ।।३।।

अथवा चित्सुखरीत्या स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् । संयोगतदत्यन्ताभावयोरवच्छेदकभेदेन भिन्नाश्रितत्वस्यैवानुभवेन सत्त्वपक्षे सामानाधिकरण्या(योगात्) भावात् । शुक्तिरूप्यादेरपि पारमार्थिकत्वाकारेण स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाच्च । न चाधिकरणशब्देन तात्त्विकाधिकरणोक्तौ समवायिनि संयोगिनि वा तत्त्वतस्तदधिकरणे तदत्यन्ताभावायोगेनासम्भवः । अधिकरणत्वेन प्रतीतत्व मात्रोक्तौ चान्यथाख्यातिपक्षे रजतत्वादेः स्वाधिकरणत्वेन प्रतीतशुक्त्यादावत्यन्ताभावस्य सत्त्वात्सिद्धसाधनमिति वाच्यम्, स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वस्य विवक्षितत्वात्, तत्पक्षे च रजतत्वादिकं स्वात्यन्ताभावानधिकरणे रजतेऽपि भाति ।। ४।।

यद्वाऽऽनन्दबोधोक्तरीत्या सद्विविक्तत्वम् मिथ्यात्वम् । तच्च सद्रूपत्वाभावः । ब्रह्म च सत्तारहितमपि सामान्यमिव सद्रूपत्वम् ।।५।।

श्रुतिश्चात्र प्रमाणम् - 'एकमेवाद्वितीयम्' इत्यादौ अद्वितीयमित्यादिशब्दैर्द्वितीयमात्रनिषेधात् । न च प्रत्यक्षबाधादनुमानयमानं श्रुतिश्चामुख्यार्थेति युक्तम्, प्रत्यक्षेण व्यावहारिकसत्त्वग्रहात् । अनुमानादिभिश्च पारमार्थिकसत्त्वनिषेधात् । नहि वर्तमानमात्रग्राहि प्रत्यक्षं त्रिकालाबाध्यत्वग्राहि । वह्निरनुष्ण इत्यत्र तु उष्णत्वस्य प्रत्यक्षसिद्धव्यावहारिकसत्त्वप्रतिषेधाद्बाधः । दृश्यते च व्योमनैल्यचन्द्रप्रादेशत्वग्राहिप्रत्यक्षयोरनुमानागमाभ्यां बाध इति ।

प्रथममिथ्यात्वलक्षणनिरासः :----

अद्वैतिनः सर्वस्यापि नामरूपात्मकस्यप्रपञ्चस्य मिथ्यात्वं वदन्ति। एतेषां मते ब्रह्मैव एकं पारमार्थिकं वस्तु अन्यद् सर्वं अज्ञानादिकं जगत् अवस्तु अतएव अद्वैतसिद्धिकारैः ग्रन्थारम्भे एव इदं तावत् प्रतिज्ञातम् यत् तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम उपपादनं च स्वपक्षसाधन परपक्ष निराकरणाभ्यां भवतीति । तदुभयं वाद-जल्प वितण्डानामन्यतमां कथामाश्रित्य सम्पादनीयम् । तत्त्वबुभुत्सा कथा वादः विजगीषाया कथा जल्प स्वपक्षस्थापन परपक्षखण्डनम् कथा वितण्डा इति लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्भवति न प्रतिज्ञामात्रेण इत्यभियुक्त वचनमङ्गीकृत्य पूर्वं तावत् मिथ्यात्वस्य पञ्च लक्षणानि उपस्थापितानि तत्र प्रथमं लक्षणं पञ्चपादिकानुसारेण सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वमिति एवं द्वितीयं तृतीयं च लक्षणे प्रतिपन्नोपाधौ त्रैकालिकनिषेध प्रतियोगित्वं मिथ्यात्वं ज्ञाननिवर्त्यत्वं वा मिथ्यात्वं इदं लक्षणद्वयं विवरणाचार्यमतानुसारेण तथा च स्वाश्रयनिष्ठात्यन्ताभावाप्रतियोगित्वरूपं मिथ्यात्वं चित्सुखाचार्यमतानुसारेण एवञ्च सद्विविक्तत्वम् इदं पञ्चम लक्षणं आनन्दबोधाचार्य मतानुसारेण उक्तं हि :-----

आद्यं स्याद् पञ्चपाद्युक्तं
ततो विवरणोदिते
चित्सुखीयं चतुर्थं स्याद्
अन्त्यमानन्द बोधजम्

एवंपञ्चविधं प्रोक्तं
मिथ्यात्वं ध्वान्तनाशनम् ।।इति ।।

तत्र प्रथमं मिथ्यात्वलक्षणं सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वं एतल्लक्षणमङ्गीकृत्य विमृश्यते । तत्र अस्मिन् लक्षणे इमं आक्षेपं कुर्वन्ति यदिदंसदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वमुक्तं तद्धि किम् असत्त्वविशिष्टसत्त्वाभाव ? उत सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं धर्मद्वयं । आहोस्वित सत्त्वात्यन्ताभाववत्त्वेसति असत्त्वात्यन्ताभावरूपं विशिष्टम् ? नाद्यः सत्त्वमात्राधारे जगति असत्त्वविशिष्टसत्त्वानभ्युपगमात्,विशिष्टाभावसाधनेसिद्धसाधनात् । न द्वितीयः सत्त्वासत्त्वयोरेकाभावे अपरसत्त्वावश्यकत्वेन व्याघातात् निर्धर्मकब्रह्मसत्त्वासत्त्वरहितेऽपि सद्रूपत्वेन अमिथ्यात्वोपपत्त्या अर्थान्तराच्च । शुक्तिरूप्ये अबाध्यत्वरूपसत्त्वव्यतिरेकस्य सत्त्वेनबाध्यत्व रूपासत्त्वस्य व्यतिरेकासिद्ध्या साधनवैकल्याच्च । अतएव न तृतीयः पूर्ववद् व्याघातात्, अर्थान्तरात्साध्यवैकल्याच्चेति चेत्,मैवम् । सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयविवक्षाया दोषाभावात् । न च व्याहतिः । सा हि सत्त्वासत्त्वयोः परस्परविरहरूपत्वाद्वा ? परस्परविरहव्यापकत्वाद्वा ? परस्पर विरहव्याप्यत्वा वा ? तत्र नाद्यः तदनङ्गीकारात तथा ह्यत्र त्रिकालाबाध्यत्वरूप सत्त्वव्यतिरेको नासत्वम् । किं तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम् ।तद्व्यतिरेकश्च साध्यत्वेन विवक्षितः । तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम् । एवं च सति न शुक्तिरूप्ये साधवैकल्ययपि बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात्,नापि व्याघातः ,परस्परविरहरूपत्वाभावात् । अतएव न द्वितीयोऽपि सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन

व्यभिचारात् । नापि तृतीय: ,तस्य व्याघाताप्रयोजकत्वात् गोत्वाश्वत्वयो: परस्परविरहव्याप्यत्वेऽपि तदभावयोरुष्ट्रादावेकत्र सहोपलम्भात् । यच्च निर्धर्मकस्य ब्रह्मण: सत्त्वराहित्येऽपि सद्रूपवत्प्रपन्चस्य सद्रूपत्वे नामिथ्यात्वोपपत्त्या अर्थान्तरमुक्तम् । तन्न एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत् प्रत्येक प्रपन्चस्य सत्स्वभावताकल्पने मानाभावात्,अनुगतव्यवहाराभावप्रसङ्गाच्च । सत प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम् । तथा चोभयात्मकत्वे अन्यतरात्मकत्वे वा,तादृग्भेदासंभवेन ताभ्यामर्थान्तरानवकाश: ।

न च असत्त्वव्यतिरेकांशस्य सद्भेदस्य च प्रपन्चे सिद्धत्वेनाशंत: सिद्धसाधनमिति वाच्यम्,गुणादिकं गुण्यादिना भिन्नाभिन्न समानाधिकृतत्वादिति भेदाभेदवादि प्रयोगे तार्किकाघङ्गीकृतस्य भिन्नत्वस्य सिद्धावपि उद्देश्य प्रतीत्य सिद्धेर्यथा न सिद्धसाधनम्, तथा प्रकृतेऽपि मिलितप्रतीतेरुद्देश्यत्वान्न सिद्धसाधनम् । यथा तत्त्वा भेदे घट: कुम्भ इति सामानाधिकरण्यप्रतीरदर्शनेन मिलितासिद्धिरुद्देश्या,तथा प्रकृतेऽपि सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेन मिलितस्य तत्प्रयोजकतया मिलितासिद्धिरुद्देश्येति समानम् ।

अतएव सत्त्वात्यन्ताभाववत्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टं साध्यमित्यपिसाधु:,न च मिलितस्य विशिष्टस्य वा साध्यत्वे तस्य कुत्राप्यप्रसिद्ध्या मिलितस्य विशिष्टस्यस्वा साधने,शशशृंगयो:प्रत्येक प्रसिद्धया शशीयशृंगसाधनमपि स्यादिति वाच्यम्, तथाविधप्रसिद्धेर्भ: शुक्तिरूप्य एवोक्तत्वात् । न च निर्धर्मकत्वाद् ब्रह्मण: सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन तत्राति व्याप्ति:,सद्रूपत्वेन ब्रह्मण: तदत्यन्ताभावानधिकरणत्वात् निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वात् इति प्रतिपादयन्ति अद्वैतिन: तन्न युक्तम् यत: न्यायामृतकारा:खण्डयन्ति तथाहि मिथ्यात्वं हि त्वयैवाद्वैतिना पदान्तर निषेधेन पन्चउक्तम् तत्राथे किम् सत्त्वेसत्यसत्त्वरूपविशिष्टस्याभावोऽभिप्रेत: ? किं

वा सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूप धर्मद्वयम् ? यद्वा सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभाववत्त्वरूपं विशिष्टम् ? नाद्य:, मन्मते सदेकस्वभावे जगति तस्य सिद्धत्वात् । न द्वितीय: व्याहते: । निर्धर्मकब्रह्मवत्सत्त्वराहित्येऽपि सद्रूपत्वेनाऽमिथ्यात्वोपपत्त्यार्थान्तराच्च । पृथिवी इतरभिन्ना पृथिवीत्वादित्यत्र त्रयोदशान्योन्याभावानामिवात्रापि सत्त्वासत्त्वात्यन्ताभावयो: प्रत्येकं प्रसिद्धत्वेन क्वचिदप्रसिद्धविशेषणत्वाभावेऽपि असत्त्वात्यन्ताभावांशे सिद्धसाधनाच्च । न हि सिद्धमसिद्धेन सहोच्चरितमसिद्धं भवति । पृथिवीतरभिन्नेत्यत्र तु जलाद्येकान्योऽन्याभावोऽपि न पृथिवीत्वोपहिते सिद्ध: । दृष्टान्तस्य साध्यवैकल्याच्च । पृथिवीत्वहेतुस्तु केवलव्यतिरेकी । त्रयोदशान्योन्याभावरूपसाध्यस्य व्यतिरेकनिरूपणं तु भिन्नाश्रितानामपि त्रयोदशान्योन्याभावानां समूहालम्बनैकज्ञानोपारूढत्वमात्रेण युक्तम् । अतएव न तृतीय:, व्याहतेरर्थान्तरात् साध्यवैकल्याच्च ।

किं च यथा अनित्ये वाङ्मनसे इत्यत्र पक्षतावच्छेदकनानात्वेनांशे सिद्धसाधनत्वेऽपि पृथिवीतरभिन्नेत्यत्र पक्षतावच्छेदकैक्यान्नांशे सिद्धसाधनम्, तथेहापि यद्यपि कथंचित् साध्यतावच्छेदकैक्यान्नांशे सिद्धसाधनत्वम् । नापि व्यर्थविशेष्यत्वम् । विमतं उपादानापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यमित्यत्र कृतिग्रहणेनैवेश्वरसिद्धावपि चिकीर्षादेरिव गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वाद् इत्यत्र तार्किकांगीकृतभिन्नत्वस्येव च व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वाद्, इह तु सद्विलक्षणत्वे सत्यसद्विलक्षणमिति प्रतीतेरुद्देश्यत्वात्। यदि चाभेदे सत्यपि घट: कलश इति सामानाधिकरण्यादर्शनादप्रयोजकत्वनिरासाय विशिष्टधीरुद्देश्या, तर्हि तुच्छे सद्वैलक्षण्ये सत्यपि दृश्यत्वादर्शनादिहापि सोद्देश्येति समम्, नाप्यप्रसिद्धविशेषणत्वम् । पृथिवी इतरभिन्नेत्यत्रत्वनेकधर्मा-

साधनपदा एव प्रत्येकप्रसिद्धया साध्यप्रसिद्धि सक्ता । अन्यथा शशादीनां प्रत्येकं प्रसिद्धया शशशृंगोल्लिखितत्वस्यापि स्यात् । इममेव विषय मधिकृत्य तरङ्गिणीकाराः वदन्ति । तथाहि- 'असत्त्वेन न प्रतीयेत्' इति वहतात्वयोक्ता- प्रतीतिप्रयोजकस्य प्रतीत्यनुपाधिकस्य वाध्यत्वाभावरूपस्यैवासत्त्वस्य वक्तव्यत्वेन घटादिगतसत्त्वस्य शशशृंगादिगतासत्त्वाभावरूपत्वस्य घटादिगतारोपितासत्त्वात्यन्ताभावरूपत्वस्य वा स्वीकारे क्रमेण तुच्छत्वस्य असत्त्वात्यन्ताभावरूपत्वस्य निःस्वरूपत्वेन तदत्यन्ताभावरूपत्वस्याऽसत्त्यनुपपत्तेश्चापदावपि समानत्वात्वयोः परस्परविरहयोर्व्याप्यत्वविशिष्टव्यापकत्वरूपत्वनियमस्याङ्गीकरणीयत्वेनोक्तव्याघाततादवस्थ्यम् । उक्तविवसत्त्वाभावव्यापकत्वं च उक्तविधासत्त्वे विद्यत एव, शुक्तिसत्ये तादृशासत्त्वस्यैव विद्यमानत्वात् । एतेन परस्पर विरह व्याप्यत्वेऽपि गोत्वाश्वत्वयोः तदभावयोरुष्ट्रे सहोपलम्भवदुपपत्त्या तस्य व्याघातप्रयोजकत्वादिवचनमपि पराहतम्, केवल व्याप्यत्वस्य व्याघातप्रयोजकत्वस्यास्मदनभिमतत्वात्, व्याप्यत्वविशिष्टव्यापकत्वस्यैव तत्प्रयोजकत्वस्याभिमतत्वात् । एवञ्च गोत्वाश्वत्वयोः परस्परविरहव्यापकत्वाभावान्नोक्त दोषः । सत्त्वाभावेऽपि ब्रह्मवत्सद्रूपत्त्वोपपत्त्याऽर्थान्तराच्च ! न च आगमापेक्षयाप्रत्यक्षस्य दौर्बल्येन तद्बाधितं सद्रूपत्वं न सिद्ध्यतीतिवाच्यम्, एवं सति रजतं विनापि शुक्तौ रजततादात्म्यवत् सद्रूपं वस्तु विनाऽपि प्रपञ्चे सत्तादात्म्यप्रतीत्युपपत्तौ ब्रह्मणोऽपि सद्रूपताया असिद्धिप्रसङ्गात् । एतेन शुक्तिरूप्ये साध्यवैकल्यमपि-सूचितम् ऐकाधिकरण्येनोभयाप्रसिद्ध्या अप्रसिद्धविशेषणत्वम् इति ।

## द्वितीय मिथ्यात्वलक्षण निरासः

इदानीं द्वितीयमिथ्यात्वलक्षणमधिकृत्य विचारः उपस्थाप्यते । द्वितीयमिथ्यात्वलक्षणस्य उत्थाने किं बीजम् इति जायमानायाम् जिज्ञासायाम्

इदं तावदुच्यते यत् "नेह नानास्ति" इयं हि श्रुतिः न प्रपन्चस्य मिथ्यात्वं प्रतिपादयितुं शक्नोति किन्तु श्रुतिघटकीभूतेन पदेन कारणं ब्रह्म प्रतीयते । तत्र कारणे ब्रह्मणि नानात्वं निषेधति तथा च न नानाब्रह्मकिन्त्वेकमेव इत्यर्थः स्यात् । ब्रह्म व्यतिरिक्तस्य सर्वस्यापि प्रपन्चस्य मिथ्यात्वं न सिध्येत् तथा च श्रुति घटकीभूतः नानाशब्दः वर्जनेऽपि अर्थे प्रयुक्तो भवति । "हीरुक्नाना च वर्जने" वर्जन शब्दोऽपि अभाव बोधकः यथा च अयं श्रुत्यर्थः स्यात् तर्हि इह ब्रह्मणि कस्यापि वस्तुनः वर्जनं नास्ति अर्थात् अभावो नास्ति किन्तु भाव एव । एवप्रकारेण प्रपन्चस्य मिथ्यात्वं न सिध्येत् एवं हि "नेहनानास्ति किन्चन इयं श्रुति विवादं आपन्ना न मिथ्यात्व बोधिका किन्तु द्वैतस्य सत्यत्व बोधिका एव । अस्यां परिस्थितौ सारव्यान्तरं द्वितीयमिथ्यात्व लक्षणं "प्रतिपन्नोपाधौ त्रैकालिक निषेध प्रतियोगित्वं मिथ्यात्वमुक्तम् । तत्र यद्वस्त्वयानिश्चितेऽधिकरणे तस्य त्रैकालिकः यः निषेधः तत्प्रतियोगित्वमेव मिथ्यात्व लक्षणम् ।

तथाहि घटतया निश्चितमधिकरणं कपालं तस्मिन्नेव कपाले घटस्य यः त्रैकालिकः निषेधः घटोनासीत्,घटोनास्ति,घटो न भविष्यति इत्याकारकस्य अत्यन्ताभावस्य प्रतियोगित्वं घटे वर्तते,अतः घटस्य मिथ्यात्वमायाति। एतदेव प्रकाशात्मयतिना "प्रतिपन्नोपाधौ अभावप्रतियोगित्वमेव मिथ्यात्वम् (पन्चपादिका वी प० १७४) अर्थात् शुक्तिकायां प्रतीयमानं रजतं तस्यामेव शुक्तिकायां जायमानस्य निषेधस्य प्रतियोगित्वं रजते वर्तते अतः रजतस्य मिथ्यात्वमायातं इति अद्वैतिनः वदन्ति । तत्र द्वैतवादिनः इत्यमापादयन्ति तथाहि प्रतिपन्नोपाधौ समुद्भूतः यः त्रैकालिकः निषेधः स किं तात्त्विकः अथवा प्रातिभासिकः अथवा व्यावहारिकः,तात्त्विकत्वे सति यदि निषेधः तात्त्विकः

स्यात् तथ द्वैतापत्ति: स्यात् यत: ब्रह्मापि तात्त्विकं निषेधोऽपि तात्त्विक:। अत: तात्त्विकद्वयापत्तौ सत्यां अद्वैत मतस्य हानि: स्यात् एवं निषेध यदि प्रातिभासिक: स्यात् तदा प्रपञ्चस्य प्रातिभासिकनिषेधेमाध्वसम्मतस्य प्रपञ्चस्य पारमार्थिकत्वं अनातं स्यात् । एवं उक्त निषेधस्य व्यावहारिकत्वेसति ब्रह्म-ज्ञानेन बाधितो भविष्यति । अत: प्रपञ्चस्यपारमार्थिकतायाविरोधि मिथ्यात्वं न पर्यवस्येत् एवं सति प्रपञ्चे सत्त्यत्वाविरोधिमिथ्यात्वसिद्ध्याऽर्थान्तरता स्यात् अर्थात् अर्थान्तरतानामकं निग्रहस्थानमेवापरिष्यति । अर्थान्तरता च अन-भिप्रेतार्थसिद्धि: तथा च विनायकं प्रकुर्वाणो रचयामासवानरं इत्याभाणक:तर्हि बाधित: स्यात् तदा बाधितार्थस्यबोधिका नेहनानास्ति श्रुति अतत्त्वावेदिका स्यात् तथा च बाधितिमासिकस्य प्रपञ्चस्य पारमार्थिकत्वं स्यात् । अयमाशय: शुक्तौ प्रतीयमानस्यरजतस्यनिषेध: व्यावहारिक स्वीक्रियते अत: तस्य प्रतियो-गिन: व्यावहारिकत्वे न सिध्यति किन्तु ब्रह्मज्ञानेतरबाध्यत्वात् प्रातिभासिकत्वमेव आयाति । प्रातिभासिकत्वं हि ब्रह्मज्ञानेतर बाध्यत्वम् । एवमविद्यातिरिक्त दो-षाजन्यत्वं प्रातिभासिकत्वे प्रयोजनम् । किन्तु व्यावहारिकनिषेधस्य प्रतियो-गिभूत: प्रपञ्च: ब्रह्मप्रमाभिन्नप्रमयाऽबाध्यत्वेन प्रातिभासिको न स्यात् । अत परिशेषात: प्रपञ्चस्य पारमार्थिकत्वमेव सिध्यति ।

अपि च प्रपञ्चस्य व्यावहारिक निषेधोऽपि यदि व्यावहारिक: स्यात् तदा निषिध्यमानत्वेन निषेधस्यापि निषेधेन प्रतियोगिन: प्रपञ्चस्य अनिषिद्धत्वं अबाधितत्त्व पारमार्थिकत्वमेवावशिष्यते । यथा रजतवतिदेशे यदि कस्यापि पुरुषस्य भ्रमो भवेत् तत्र ० रजताभाव: इति । तथा च कुतश्चिद् कारणविशेषात् अधिष्ठान साक्षात् काराद्वा सद्य एव यदि तस्य भ्रमो निवर्तते तदा रजताभावो नास्ति इत्थं प्रतीयते अस्यांपरिस्थितौ तत्र रजतस्य सत्त्वमेव

भवति । तथैव प्रपञ्चस्य निषेधो जात: द्वैतं नास्ति । अयं च निषेध:व्यावहारिकमात्रम् व्यावहारिकत्वात् । ब्रह्मज्ञानबाध्यत्वेन तस्यापि निषेधो जात: "नेह नानास्ति किञ्चन" अनया श्रुत्या अत: निषेधस्य निषेधेऽपि रजतवदेव प्रपञ्चस्यापिसत्त्वं पूर्वदेवावशिष्यते ।

अपि च ब्रह्मणि य: प्रपञ्चस्य निषेध: क्रियते अद्वैतवादिभि: स केनरूपेण विवक्षित: येन व्यावहारिकत्वरूपेण अथवा प्रातिभासिकत्वरूपेण प्रतीयते ? अथवा येन पारमार्थिकत्वरूपेण स कदापि न प्रतीयते तेन रूपेण प्रपञ्चस्य त्रैकालिक: निषेध: विवक्षित: ? तत्र नाद्य पक्षसमीचीन: यत: आकाशादिसर्वस्यापि व्यावहारिक प्रपञ्चस्य उत्पत्ति:" तस्माद्वाएतस्मादात्मन: आकाश: सम्भूत:" इत्यादि श्रुतिषु प्रतिपादिता प्रमाणिता च अस्ति। तथा च रजतादि प्रातिभासिक प्रपञ्चस्य उत्पत्ति: अर्थापत्यादि प्रमाणै:प्रसाधिता । एवम द्विविधोऽपि प्रपञ्च: स्वार्थ क्रियायां सक्षम: । एवञ्च बौद्धाचार्य: धर्मकीर्तिरपि उक्तवान् - अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुन:" (न्या० नि०१।१५) अयं भाव: हेयोपादेय रूपं प्रयोजनम् येन निष्पद्यते,तद्वस्तुसत्यं च भवति । यथा लोके व्यावहारिक रजतेन कटककुण्डलादिकम् निर्मीयते तथैव प्रातिभासिक रजतेनापि ज्ञानेच्छाप्रवृत्त्यादिकम् सर्वं निष्पद्यते । एवञ्च उक्त द्विविधस्यापि प्रपञ्चस्य उत्पत्ति: अविद्यया अधिष्ठानाज्ञानेन भवति । तन्निवृत्तिश्च तत्त्वज्ञानेन भवति । एवमुभयस्यापि प्रपञ्चस्यासद्विलक्षणत्वात् स्वप्रतीतिकाले अवश्यमेव विद्यमानत्वं स्यात्, अत: तस्य तेन रूपेण त्रैकालिक: निषेध: न संभाव्यते ।

नापि पारमार्थिकत्वेन निषेध: अयं द्वितीयोऽपि पक्ष: समीचीन: । एवं सति अन्योन्याश्रयरूप: दोष: प्रसज्येत । अन्योन्याश्रयत्वञ्च

परस्परापेक्षात्वं अथवा तद्ग्रहसापेक्षाग्रहविषयत्वम् । तथाहि अबाध्यत्वरूपस्य पारमार्थिकत्वस्य निरूपणेन प्रतियोगिभूतं बाध्यत्वरूपं मिथ्यात्वमपेक्षते । एवञ्च मिथ्यात्वस्य निरूपणे पारमार्थिकत्वमपेक्षते । अतः उक्त पारमार्थिकत्वज्ञानेसति पारमार्थिकत्वावच्छिन्नप्रतियोगिताकनिषेधप्रतियोगित्वरूप मिथ्यात्वस्य ज्ञानं भविष्यति । तथा च एवमुक्तप्रकारमिथ्यात्वस्य ज्ञाने सति अबाध्यत्वरूप पारमार्थिकत्वस्य ज्ञानं भवेत् ।

अपि च नापि पारमार्थिकत्वेन प्रपञ्चो नास्ति एवं प्रकारेण निषेधस्य तात्पर्यं प्रपञ्चे यदि पारमार्थिकत्व धर्मेण निषेधो स्वीक्रियेत तदापि पारमार्थिकत्वस्य स्वरूपेण निषेधे प्रथमपक्षोक्त असम्भवरूपः दोषः आपतिष्यति ।अतः अनवस्थारूपं दूषणं प्रसक्तं भविष्यति ।

किञ्च प्रातिभासिकस्य रजतादेः व्यावहारिकस्य प्रपञ्चस्य स्वरूपतः निषेधे सति खपुष्पवत् रजतादि कम् सर्वमन्यतमत्वात् भविष्यतीति अर्थात् रजतादेः प्रातिभासिकं सत्त्वं घटादिप्रपञ्चस्य च व्यावहारिकं सत्त्वं न सेत्स्यति । यतः स्वाश्रयात् कपालादेः अन्यत्र घटादीनामभावः निश्चित एव यदि च प्रतिपन्नोपाधौ (अर्थात् स्वाश्रयीभूत कपालादावपि ) यदि तेषां अभाव स्वीकृतो भवेत् तदा घटादिषु सर्वत्रैव त्रैकालिकनिषेधप्रतियोगित्वमेव स्वीकर्तुम् भविष्यति ।यदि च एवं स्वीक्रियते चेत् तदा कपालादेरन्यत्र घटादीनां सत्ता अङ्गीकर्तव्या किन्तु अद्वैतिवादिनां इदं तावन्मतम् वर्तते ।न हि तेषामन्यत्र सत्ता संभविनी (चित्सु० पृ०४७) अर्थात् घटादीनां कपालादेरन्यत्र सत्ता न संभविनी । एवञ्च इष्टसिद्धिकारेणाप्युक्तम् नान्यत्रकारणात् कार्यं न चेत् तत्र क्व तद्भवेत् (इष्ट०पृ०३६)।

अयमाशय: यदि कारणे कार्यस्य सत्त्वं न स्वीक्रीयते तर्हि क्व तस्य सत्त्वं स्यात् इति । अतः शुक्तिरजतादिषु असतश्च किं तावत् वैलक्षण्यं यतः एवमेव शशशृङ्गादयः असन्तो भवन्ति । यतः सर्वत्रैव शशशृङ्गादीनाममावयोः स्वीक्रीयते । यतः शशशृङ्गादिकं खपुष्पादिकं च एतदपि असत् शब्देन व्यपदिश्यते। असत् तुच्छं अलीकं च एतत्सर्वं अनार्थान्तरम् ।अलीकत्वञ्च कालासम्बन्धित्वम् अथवा सर्वदेशकालनिष्ठात्यन्तामावप्रतियोगित्वमिति सादात्म्यशून्यं इति । यदि उच्येत शशशृङ्गादिकम् केनापि शब्देन न वक्तुं योग्यम्,अतः निरुपाख्यत्वमेव हि तेषामसत्त्वम् । शुक्तिरजतादीनां ईदृशी असत्ता नास्ति ।यत रजतादि शब्देनैव शुक्ति रजतादीनां उपाख्यानं भवति । अत्यैतावता वैलक्षण्यं तदपि असमी चीनमेव यतः नहि शशशृङ्गादीनामपि सर्वथानिरुपाख्यत्वमेवास्ति । अतःनिरुपाख्यशब्देनैव तेषामुपाख्या भवति । यदि च शशशृङ्गादिकम् कुत्राप्यधिकरणे प्रतीयमानं न भवति अतः अप्रतीयमानत्वमेव तेषामसत्त्वम् इत्येव यदि अद्वैतिभिः स्वीक्रीयेत,एतदपि न वक्तुम् शक्यम् यतः शशशृङ्गादीनामसत् पदार्थानां सर्वथा प्रतीतिरेव न स्यात् तदा प्रपञ्चे असतः भेदज्ञान कथं स्यात् ।यतो हि भेदप्रतीतिं प्रति तस्य प्रतियोगिप्रतीतिः कारणं भवति । असत रुपस्य प्रतियोगिनः अप्रतीतौ सत्यां असतः असत्प्रतियोगिकभेदस्य च प्रतीतिर्न भविष्यति । एवञ्च असतः अप्रतीतौ च सत्यां असतः प्रतीतिर्नभवति एवं प्रकारेण असत् प्रतीतेर्निराकरणमपि कथं भविष्यति । अतः अभाव ज्ञानं प्रति प्रतियोगिकज्ञानं कारणं भवति । यतः कस्यापिवस्तुनः प्रतीतेर्निषेधो तदा भवति यदा तस्य वस्तुनः ज्ञानं भवति । असतः अप्रतीतौ सत्यां असतः ज्ञानं च विना असत् प्रतीति निरासश्च कथं भवेत् एवं असतः वस्तुनः प्रतीतिं विना असत् शब्देन तस्याभिधानं व्यर्थं च असत् इति पदस्य च प्रयोगश्च कथं भविष्यति ।यदि च शश-शृङ्गादीनां अपरोक्षतया कदापि मानं न भवति । अतः तेषामपरोक्षारुपेण अभावमेव असत्त्वं इत्येवमद्वैतिवादिभिरुच्येत तदपि न वक्तुं शक्यते यतः तदा सदाऽतिन्द्रियपदार्थानां धर्माऽधर्मादीनां च असत्त्वं अभ्युपगतं स्यात् यतः न हिधर्माऽधर्मादीनां

अतिन्द्रियपदार्थानां कदापि अपरोक्षात्मप्रतीति र्भवति । अतः अस्यां परिस्थितौ सर्वेषामतिन्द्रियपदार्थानां धर्माधर्मादीनामसत्वं स्वीकृतम् भविष्यस्यति।

अथ च यदि उपाधिपदं सदर्थकं भवेत् तदा उक्तमिथ्यात्वरूपं साध्यं एव पर्यवसितं भवति तथाहि - समस्त सद्रूपाधिकरणे वर्तमानात्यन्ताभाव प्रतियोगित्वं हि मिथ्यात्वमायाति । इदं तु केवलान्वपि नः अर्थात् सर्वत्र वर्तमानस्यात्यन्ताभावस्यप्रतियोगिभूते गगनादौ नैयायिकाः पूर्वमेव स्वीकुर्वन्ति । अतः उक्तानुमाने सिद्धसाधनतादूषणमस्ति । अथ च यस्य वस्तुनः यत् सद्रूपमधिकरणं भवति तस्मिन्नधिकरणे वर्तमानस्यात्यन्ताभावप्रतियोगित्वं तस्य वस्तुनः मिथ्यात्वम् । एवं विवक्षायां सत्यां यद्यपि गगनादि अवृत्तिमेत् पदार्थेषु उक्तदूषणस्य निवारणं भवितुमर्हति,यत गगनादेः किमपि अधिकरणं न भवति अतः प्रथम यत् पदेन तस्य ग्रहणं न संभवितुमर्हति पुनः कथं तत्र सिद्धसाधनता स्यात् । तथापि घटः यत्र संयोग सम्बन्धेन वर्तते तत्रैव समवाय सम्बन्धेन तस्यात्यन्ताभावः एवञ्च घटः यत्र समवायसंबन्धेन तिष्ठति तत्रैव तस्य तस्य संयोगसम्बन्धेनात्यन्ताभावः स्वीक्रीयते ,अतः अत्यन्ताभाव प्रतियोगित्व रूपं मिथ्यात्वम् । घटादि पदार्थेषु स्वतः सिद्धतया तेषु सिद्धसाधनं दुर्धरम् , अतः अस्य सिद्धसाधनता रूपदूषणस्य निवारणाय यदि सम्बन्धविशेषस्यापि निवेशं कृत्वा यथेवमुच्यत यत येन संबन्धेन यस्मिन्नधिकरणे यद्वस्तुवर्तते तेनैवसम्बन्धेन तस्मिन्नाधिकरणे वर्तमानात्यन्ताभाव प्रतियोगित्वमेव तस्य वस्तुनः मिथ्यात्वं विवक्षितमवति । तदा एवमपि अव्याप्यवृत्ति संयोगादिपदार्थेषु उक्तसिद्धसाधनं वर्तते एव यत् एकस्मिन्नैव वृक्षे शाखावच्छेदेन कप्यादीनां संयोगः समवायसम्बन्धेन तिष्ठति एवञ्च तत्रैव वृक्षे मूलावच्छेदेन तस्मिन्नेवकाले संयोगात्यन्ताभावोऽपि वर्तते अतः तदत्यन्ताभावप्रतियोगित्वं अव्याप्यवृत्तिसंयोगादिषु

पदार्थेषु सुलभमेव । तत्र द्वितीय मिथ्यात्वलक्षणम् "प्रतिपन्नोपाधौ त्रैकालिक निषेध प्रतियोगित्वम्" मिथ्यात्वम् एतल्लक्षणमङ्गीकृत्य आहुश्च अद्वैतसिद्धिकाराः त्रैकालिकनिषेधस्य प्रातिभासिकत्वातिरिक्तसर्वस्वरूपत्वं, प्रतियोगित्वस्य स्वरूपावच्छिन्नत्वपारमार्थिकत्वावच्छिन्नत्वरूपपक्षद्वयं च सर्वमपि क्षोदक्षममर्थैवेति द्वितीयमिथ्यात्वमपि संभवदुक्तिकमेव इति वर्णयन्ति । तेषामयमाशयः निषेधाधिकरणीभूत ब्रह्माभिन्नत्वान्निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानि , ब्रह्माभिन्नस्य वस्तुतोऽनभ्युपगमात् । व्यावहारिकत्वेऽपि निषेध्यापेक्षया न्यूनसत्ताकत्वस्यैव तात्त्विकसत्वाविरोधित्वमिति स्वाप्ननिषेधबाधितस्वाप्नार्थदृष्टान्तेनाभ्युपगमनीयतया निषेधबाध्यत्वस्य तात्त्विकसत्त्वा, विरोधित्वाभावेनोक्तार्थान्तरबाध्योरनवकाशः ,एवं यत्र हि निषेधस्य निषेधेन प्रतियोगिसत्त्वव्यवस्थाप्यते तत्रैव निषेधस्य निषेधे प्रति योगिनोऽधिकसत्ताकत्वमिति प्रकृते प्रपन्चनिषेधेनानुमानेन श्रुत्वा वा प्रपन्चस्यापि निषेधान्न प्रपन्चाधिकसत्त्वापत्तिः, एवं अतात्त्विकं प्रपन्चमतात्त्विकत्वेन बोधयन्त्याः श्रुतेर्न प्रामाण्यानुपपत्तिः।

स्वरूपावच्छिन्ननिषेधप्रतियोगित्वाङ्गीकारेऽपि न दोषः, शुक्तौ रजतभ्रमानन्तरमधिष्ठानतत्त्वसाक्षात्कारे रूप्यं नास्ति नासीन्न भविष्यतीति स्वरूपेणैव निषेधप्रतियोगित्ववत् ,प्रपन्चे "नेह नानास्तिकिंचन" इति श्रुत्या स्वरूपेणैव निषेध प्रतीत्या समासत्ताकयोरपि भावाभावयोरविरोधात्, भ्रमबाध्योर्वैयधिकरण्यापत्त्यादिना लौकिकरजतस्यैव भ्रमे भानमित्यङ्गीकारासंभवात् त्रैकालिक निषेधं प्रति स्वरूपेणापरस्थरूप्यं प्रातिभासिकं वा न पारमार्थिकत्वाकारेण निषेधप्रतियोगी" त्या चार्यवचनस्यापि स्वरूपेण पारमार्थिकत्वाकारेण वाऽऽपणस्यरूप्यतादात्म्यापन्नप्रातिभासिकरूप्यनिषेध बोधन एव तात्पर्येण मतहान्यभावात्, सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वस्य तुच्छानिर्वाच्यसाधारण्येऽपि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वतदभावरूप-

सत्तादात्म्याभ्यां तयोर्विषम्यसत्त्वे नात्र सत्तादात्म्यसमानाधिकरणोक्तमैकालिक निषेध प्रतियोगित्वसाधनेनात्यन्तासत्त्वापत्त्यसंभवाच्च ।

द्वितीय पक्षेऽपि न दोषः बाध्यत्वरूपमिथ्यात्वानिरूप्य तथैव पारमार्थिकत्वनिर्वचनसंभवेनान्योन्याश्रयानवकाशात्, स्वरूपेणैव पारमार्थिकत्वात् शुक्तिरूप्यं नास्तीत्यादिरूपेणापि प्रतीतेरानुभविकत्वेन श्रुतेरपि तादृशाभिप्रायकल्पनसंभवेनचादोषात्, अनवस्थां विनैव पारमार्थिकत्वेन पारमार्थिकनिषेधस्यापि ब्रह्मानन्द सरस्वत्युक्तरीत्योपपादनसंभवात्, उपाधिपदेनाधिकरणस्यैव विवक्षणेन अध्यस्ताधिष्ठानविवक्षणनिबन्धनान्योन्याश्रयस्याप्यनवसरात्, निर्धर्मके ब्रह्मणि पारमार्थिकत्वस्यैव तदवच्छिन्नप्रतियोगित्वस्याप्यभावेनातिव्याप्त्यनवसराच्च इति । तदेतन्तरङ्गिणढास्काराऽक्षमन्ते तथाहि ----

नहि त्रैकालिकनिषेधस्य तात्त्विकत्वपक्षः क्षोदक्षमः, शुक्तिरूप्ये व्यावहारिकमिथ्यात्वस्यैवाङ्गीकृतत्वेन तत्र साध्यवैकल्यात् । तस्यापि तात्त्विकत्वे तु प्रत्यक्षादेरपि तत्त्वावेदकत्वरूपप्रामाण्यापत्तिः। निषेधाधिकरणब्रह्ममात्रत्वं निषेधस्येति तु न संभवति, प्रपञ्चभ्रमार्थमधिष्ठानवध्यस्फुरणस्यावश्यकतया ब्रह्माभिन्नप्रपञ्चनिषेधस्यापि प्रकाशे प्रपञ्चभ्रमासंभवात् । निषेधत्वेनाप्रकाशात्तादृशभ्रमासंभव इति तु न भवति, निषेधत्वादेरपि निर्विशेषत्वोपपत्त्यर्थं भवन्मते ब्रह्ममात्रत्वात् । एवं तद्व्यावहारिकत्वपक्षोऽपि न संभवति, स्वाप्न निषेधस्य जाग्रत्बाधेन व्यावहारिकत्वात्, स्वप्न दृष्टत्वमात्रेण बाध्यत्वे आत्मादेरपि तदापत्तेः स्वाप्निकतात्त्विकत्वाप्रसङ्गेन निषेध्यापेक्षया न्यूनसत्त्वस्यैव तात्त्विकसत्त्वाविरोधित्वमिति कल्पनाया अयोगेन, योगेऽपि

निषेधस्य निषेधे प्रतियोग्यधिकसत्ताकत्वस्य रजतादौ दर्शनेन यत्र प्रतियोगिनः सत्वविनानिषेध निषेधोनुपपन्नस्तत्र प्रतियोगिसत्त्वस्याङ्गीकरणीयत्वेन प्रपन्चतदभावयोस्तुल्यसत्ताकत्वाभावेन प्रपन्चपारमार्थिकत्वस्यावर्जनीयत्वात् । अत्यन्ताभावनिषेधस्यैव प्रतियोगिसत्त्वप्रयोजकत्वं विवक्षितमिति ध्वंसनिषेधेन प्रागभावनिषेधेन वा प्रतियोगिसत्त्वेऽपि न दोषः । एतेन -'यथा ध्वंसप्रागभावयोरिति तद्दृष्टान्तेन नियमविरोधपरिकल्पनं पराहतम । एवं तद्व्यावहारिकत्वेऽतात्त्विकप्रतियोगितदभावयोरैक्य बोधनस्य विरुद्धत्वात्स्वार्थसत्तानिश्चयकत्वरूश्रुति स्वाभाव्यमपि भग्नं स्यात् ।

एवं स्वरूपेण निषेधप्रतियोगित्वरूपपक्षोऽपि नोपपन्नः , युष्मदाचार्यैः स्वरूपेणापणस्थरूप्यस्यैवा निषेध इति प्रतिपादनेन दृष्टान्ते साध्यवैकल्यात् । न च अस्मदाचार्यवचसामापणस्थरूप्यतादात्म्यापन्न प्रातिभासिकरूप्यस्य स्वरूपतो निषेधबोधन एव तात्पर्यमिति - वाच्यम् ,प्रातिभासिकरूप्यस्यापणस्थरूप्यज्ञानेन निवृत्यदर्शनेन तदज्ञानाकार्यस्य तत्तादात्म्याभावात् । एवन्च परस्परविरुद्धार्थबोधकान्भवदाचार्याननुसृत्यान्धगोलाङ्गूलन्यायेन प्रवृत्तानां भवतामपि वचनमनुपादेयमेव । असत्त्वेन्न प्रतीयतेति वदता भवतां प्रतीत्यनुपाधिकमेवासत्त्वं निर्वचनीयमिति पूर्वमेवोक्तत्वादत्यन्तासत्त्वापत्तिरपि सुदृढैवेति द्वितीयमिथ्यात्वमपि न संभवदुक्तिकम् इति ।

तृतीय मिथ्यात्वलक्षणनिरासः :----

किन्च ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम्' इदमपि मिथ्यात्वस्य लक्षणं विवरणाचार्याणां मतानुसारेणैव प्रतिपादितं तेषां अयमभिप्रायः

तथाहि अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेनवा सह ज्ञानेन निवृत्तिर्वाध: अर्थात् अज्ञानस्य वर्तमानेन प्रविलीनेवा कार्येण सह तत्त्वज्ञानेन अज्ञानस्य निवृत्तिर्बाध: अत: ज्ञाननिवर्त्यत्वम् मिथ्यात्वं इत्यद्वैतिनो वदन्ति तन्नसमीचीनम् यत ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वलक्षणं तत्र ज्ञानेऽतिव्याप्तं यस्य ज्ञानस्य निवृत्ति: स्वोत्तरवर्तिनाज्ञानेन जायते एवञ्च मुद्गरप्रहारेण विनष्टे घटादौ अव्याप्तिरपि यत: मिथ्याभूतेऽपि ज्ञानद्वारा निवृत्तेरभावात् मुद्गरप्रहारेण नष्ट: आह । यद्यपि ज्ञानत्वेनरूपेण ज्ञानं यस्य निवर्तकं भवति तदेव मिथ्या भवति एवं पूर्वज्ञानस्य निवर्तकं यदुत्तरं ज्ञानमुक्तम् तत् नहि ज्ञानत्वेनरूपेण निवर्तकम् । अपि तु विशेष गुणत्वेन निवर्तकम् यत: वैशेषिकाणां अयं सिद्धान्त: वर्तते आत्मादि विभुद्रव्याणां विशेषगुणा: स्वपूर्ववर्तिविशेषगुणानां निवर्तका: भवन्ति । आत्मादि योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात् यथा आत्मनिपूर्वं ज्ञानं जातम् पश्चात् इच्छा अथवा ज्ञानान्तरम् जातम् । तत्र प्रथम ज्ञानस्यनाश: पश्चात् भाविन्याइच्छया अथवा ज्ञानान्तररूपविशेषगुणेन भवति। फलत: पूर्वज्ञानस्य उत्तरज्ञानेन या निवृत्तिर्जायते सा निवृत्ति: उत्तरज्ञानविशेषगुणत्वे हि एवञ्च उत्तरज्ञानविशेषगुणा एव निवर्तका: भवन्ति । ज्ञानत्वेन निवर्तकता नास्ति किन्तु उत्तरज्ञानविशेष गुणत्वेन निवर्तकता अत: ज्ञानत्वेन ज्ञाननिवर्त्यत्वरूपमिथ्यात्व लक्षणस्य अतिव्याप्ति वारणं भवति अर्थात् उक्तस्थले अतिव्याप्तिदूषणं नास्ति तथापि मुद्गरपात निवर्त्यघटादौ अव्याप्ति दूषणं तु स्थिरमेव । यदि च ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायां शुक्ति रजते साध्यविकलतापि यत: शुक्तिरजतस्य निवर्तकं यद् शुक्तिज्ञानमस्ति तत् अधिष्ठानसाक्षात्कारत्वेन निवर्तकं न तु ज्ञानत्वेन यतोहि अधिष्ठानस्य सामान्य ज्ञानं अध्यस्तस्य निवर्तकं न भवति अपि तु अधिष्ठान साक्षात्कार: अन्यथा श्रवणमात्रेणैव आत्म-

विषयकमज्ञानं नष्टं भविष्यति । तदा श्रवणान्तरं मनननिदिध्यासनयोः वैयर्थ्यं स्यात् । साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वस्य संग्रहार्थम् ज्ञानत्व व्याप्यधर्मेण ज्ञाननिवर्त्यत्वस्यविवक्षायां स्मृति ज्ञानेन निवर्त्ये संस्कारेऽपि अतिव्याप्तिर्भविष्यति ।यतः स्मृति ज्ञानमपि ज्ञानत्वव्याप्य स्मृतित्वेनैव संस्कारस्यनिवर्तकम भवति । अतः तृतीयमपि मिथ्यात्वलक्षणं दुष्टमेव अद्वैतसिद्धि कारास्तूक्तरूपमपि मिथ्यात्वं निर्दुष्टमेवेति साधयन्ति तथाहि ---

ज्ञाननिवर्त्यत्वं हि ज्ञानप्रयुक्तावस्थिति सामान्यविरहप्रतियोगित्वम्, एवन्च कार्यात्मना कारणात्मना च द्विविधाऽवस्थितित्वावच्छिन्नविरहस्य ज्ञानप्रयुक्तस्यैवात्र विवक्षणात् "अविद्या सह कार्येण नास्ति नासीद्भविष्यतीति वाक्यस्याविद्यायामपि सत्त्वेन तत्परिणामभूतभ्रमस्यापि तथात्वेन शुक्त्यज्ञानरूप्यविभ्रमयोरपि मिथ्यात्वस्येष्टत्वेनालक्ष्यत्वाभावेनातिव्याप्त्यनवसरात्,शुक्ति ज्ञानेरूप्यं नास्ति नासीन्न भविष्यतीति प्रतीतेरानुभाविकत्वेन रूप्यस्यापि मिथ्यात्वात् साध्यवैकल्याभावात्, उत्तरज्ञानेन पूर्वज्ञानस्य स्वात्मनावस्थितिविरहस्य प्रयुक्तत्वेऽपि कारणात्मनावस्थितिविरहस्य तत्त्वाभावादर्थान्तरस्यापि नावकाशात्,परोक्षापरोक्षसाधारणस्यापि ज्ञानत्वस्य स्वरूपसंबन्धरूपनिवर्तकतावच्छेदकत्वाङ्गीकारेणापिविसंभवाच्च ज्ञानत्वेन ज्ञाननिवर्त्यत्वपक्षो न दोषः । एवं ज्ञानत्वव्याप्यधर्मेण विवर्तकतापक्षोऽप्यदुष्ट एव, स्मृतित्वेन स्मृतेः संस्कारनिवर्तकताया अनङ्गीकारात्,स्मृतौ सत्यां संस्कारो दृढो भवतीत्येवानुभवात् । स्मृतिसामान्यस्यायथार्थत्वमेव न यथार्थस्मृतिरपि समस्ति इति विन्दु टीकोदाहृतपक्षानुसरणे तु अनुभवत्वव्याप्य धर्मेण ज्ञाननिवर्त्यत्वपक्षोऽपि न दोषाय । एवं श्रमोपरसाक्षात्कारत्वेन तन्निवर्त्यत्वमिथ्यात्वपक्षोऽपि समीचीन एव,जीवन्मुक्तीयाज्ञानसंस्कारस्य चरमसाक्षात्कारेणैव निवृत्तिर्नतु ज्ञानसंस्का-

रैणेत्यङ्गीकारेण तत्रापि दोषाभावात् । अनाद्यध्यासानामप्यविद्योपादानकत्वस्य तत्समकालिकत्वेन न्यायरत्नावल्यामुपपादितत्वेन स्वोपादाननिवर्तकज्ञाननिवर्त्यत्वपक्षस्याप्यदुष्टत्वादिति तदेतत्तरङ्गिणीकाराः नानुमन्यन्ते तथाहि नतावत् ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वम्, तत्रावस्थित्या सामान्यं विशेष्यते वा, विरहो वा, आद्येऽवस्थिति सामान्यं कारणात्मनावस्थानं कारणमिति यावत् ,एवं च ज्ञानप्रयुक्तविरहप्रतियोगिस्वकारणकत्वं मिथ्यात्वमिति पर्यवसितम् । एवं चोत्तरज्ञाननिवर्त्यपूर्वज्ञानजन्यसंस्कारे सिद्धसाधनम् ,अनाद्यविद्यादौ बाधश्च । कारणशब्देनाविद्योक्तौ चाविद्याकारणकत्वमेवास्तु,शेषवैयर्थ्यात् । अनाद्यविद्यादौ बाधश्च ।द्वितीये कारणात्मना विरहस्य ज्ञानप्रयुक्तत्वेऽपि स्वरूपेण विरहस्य ज्ञानप्रयुक्तत्वाद्घटादावव्याप्तिः। रूप्यादेरवस्थित्यङ्गीकारे स्वरूपेण निषेधायोगेन स्वरूपेण निषेधं वदतां भवतां मतेऽत्यन्तासत्त्वस्यापादितत्वेन शशशृङ्गाद्यभावस्येव रूप्याभावस्यापि ज्ञानाप्रयुक्तत्वात् दृष्टान्ते साध्यवैकल्यम्,पक्षे बाधश्च । ज्ञानत्वव्याप्य धर्मेणेति पक्षोऽपि न युक्तः,मनस्त्वादिना ज्ञाननिवर्त्ये संशयविशेषेऽतिव्याप्तेः । एतेन-साक्षात्कारत्वेन ज्ञाननिवर्त्यत्व पक्षोऽपि परास्त युष्मन्मते प्रत्यक्षस्य शब्दवाच्यत्वेन नायं सर्पः इत्याप्तोपदेशनिवर्त्यरज्जुसर्पादावव्याप्तेःइति ।

चतुर्थ मिथ्यात्वलक्षणनिरासः :----

एवमपि चित्सुखाचार्य सम्मतं चतुर्थमपि लक्षणमसाधु तथाहि चित्सुखाचार्याः "स्वाश्रयनिष्ठात्यन्ताभाव प्रतियोगित्वं" मिथ्यात्व लक्षणं वदन्ति,तच्च स्वात्यन्ताभावाधिकरणे एवं प्रतीयमानत्वम्" अतः पूर्वोक्तलक्षण्यं एवं घटः तदाश्रयः कपालं तन्निष्ठात्यन्ताभावः घटात्यन्ताभावः तत्प्रतियोगित्वं घटे अतः एवं रीत्या घटस्य मिथ्यात्वं पर्यवस्यति । एवं च तथाहि

स्वाश्रये प्रतीयमानस्यात्यन्ताभावस्य प्रतियोगित्वमेवमिथ्यात्वम् । अस्येदं तात्पर्यं मिथ्याभूतस्य वस्तुनः स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं अतः पूर्वोक्तात् द्वितीय लक्षणात् प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वं इत्यस्माद् अस्य चतुर्थमिथ्यात्व लक्षणस्य वैलक्षण्यं अतः न पौनरुक्त्यम् ।इति हि तेषां मतम् । स्वाश्रयनिष्ठ इत्यस्य स्वाश्रयत्वेनाभिमत इत्यर्थः तथा च स्वाश्रयत्वेनाभिमतः यावन्निष्ठात्यन्ताभाव प्रतियोगित्वं मिथ्यात्वलक्षणम् । स्वाश्रयत्वेनाभिमताः यावन्तः तेषु निष्ठः यः अत्यन्ताभावः तत्प्रतियोगित्वम् । अत्र स्वं पदं यस्य मिथ्यात्वं साधनीयं तत्परम् ।अभिमतपदं प्रमृतिव्यावृत्ति प्रतीति विशेष्यपरम् ।यावत् पदमशेषपरम् । तथा च स्वाश्रयत्वेन स्वप्रकारक प्रतीति विशेष्यत्वेन अभिमते प्रतीते यावति सकले निष्ठः स्थितः विद्यमानः यः स्वात्यन्ताभावः तत्प्रतियोगित्वं स्वस्वमिथ्यात्वमित्यर्थः । यथा इदं रजतम् इत्यत्र एवं शुक्तिरुप्यं तदाश्रयत्वेन तत्प्रकारक प्रतीतिविशेष्यत्वेन अभिमतं प्रतीतं यद्यद् इदमात्मकं पुरोवर्तिद्रव्यं तस्मिन्यावति समस्तपुरोवर्तिनि द्रव्ये निष्ठः स्थितः यः स्वस्य शुक्तिरूप्यस्य अत्यन्ताभावः तत्प्रतियोगित्वं शुक्तिरुप्यस्य इति मिथ्याभूते प्रातिभासिके लक्षण समन्वयः । एवं च स्वप्रकारक प्रतीतिविशेष्ये स्वाधिष्ठान चैतन्ये सर्वस्यापि व्यावहारिकाभावस्य विद्यमानत्वात् तत्प्रतियोगित्वं सर्वस्यैव व्यावहारिकस्य इति व्यावहारिकेऽपि लक्षण समन्वयः ।

ननु अस्मिन् मिथ्यात्वलक्षणे अभिमतपदस्य निवेशः न कर्तव्यः स्वाश्रयनिष्ठात्यन्ताभाव प्रतियोगित्वमेतावन्मात्र मिथ्यात्व लक्षणमस्तु इति चेत् मैवम् यतः सर्वेष्वपि आश्रयेषु स्वात्यन्ताभावस्य असम्भवः ,अतः स्वस्यैव

स्वात्यन्ताभावस्य असम्भवः स्यात् तन्निवारणाय लक्षणे अभिमतपदमावश्यकम्। अन्यथा स्वाश्रयशब्देन शुक्त्यादीनामपि ग्रहणं भविष्यति ।तत्र विद्यमानः यः अत्यन्ताभावः स शुक्त्यादीनामेव ग्राह्यः किन्तु अयंमसम्भवः अतः लक्षणे असम्भवाख्यं दूषणं भविष्यति तन्निवृत्यर्थं अभिमतपदं लक्षणे निवेश्यते ,वस्तुतः शुक्त्यादिकं रजतादीनां आश्रयो नास्ति तथापि इदं रजतमिति शु भ्रमे सति शुक्तिका तस्याश्रयः इति मन्यन्ते । एवं प्रकारेण स्वाश्रयत्वेनाभिमते शुक्तिकादौ यः रजतादीनामत्यन्ताभावः तत्प्रतियोगिताशुक्तिरूप्यादिष्वुवर्तते । अतः लक्षणे अभिमतपदस्य निवेश आवश्यकः ।एवञ्च एवमेव लक्षणे यदि यावत् पदं न दीयते तदानिर्दुष्टं लक्षणं न स्यात् तथाहि एकस्मिन्नेवृक्षेशाखायच्छेदेन कपिसंयोगो वर्तते मूलावच्छेदेन कपिसंयोगात्यन्ताभावोऽपि वर्तते एवं कपिसंयोगस्य आश्रयत्वेनाभिमतः वृक्षः तत्रैव मूलावच्छेदेन विद्यमानस्य कपिसंयोगस्य एवं कपि संयोगस्याश्रयत्वेनाभिमतः वृक्षः तत्रैवमूलावच्छेदेन विद्यमानस्य कपि संयोगस्यात्यन्ताभावः तत्प्रतियोगित्वं शाखावच्छेदेन विद्यमाने कपि संयोगे वर्तते ।अतः द्वयोः कपिसंयोगात्यन्ताभावयोः सामानाधिकरण्य रूपं अर्थान्तरं स्यात् ।अर्थान्तरत्वञ्च अनभिप्रेतार्थसिद्धिः अतः अर्थान्तरतारूपदोषवारणाय लक्षणे यावत् पदस्य निवेशः कर्तव्यः ।अतः स्वाश्रयत्वेन यावति शाखादौ तत्र कपिसंयोगात्यन्ताभावो नास्ति अतः अत्यन्ताभावस्य प्रतियोगिता कपि संयोगे नास्ति एवं सति अर्थान्तरतारूपदूषणस्य वारणं भवति ।

किञ्च प्रामाणिकात्यन्ताभावस्य प्रतियोगित्वं साध्यत्वेन विवक्षितं अथवा प्रातिभासिकात्यन्ताभावस्य प्रतियोगित्वं तत्र नाद्य पक्षः समीचीनः अभावस्य प्रामाणिकत्वे तद एव द्वैतापत्तिः । किन्तु अभावानां एव स्वभावो भवति यत् प्रतियोगिनिरूपणीयत्वं तथा च यद्यभावाः प्रामाणिकाः स्युः सुतरां तन्निरूपकाभावाः तथा च अद्वैतस्य आशैव नोदेश्यति । तथा च न मिथ्यात्वं सेत्स्यति । नापिद्वितीयः पक्षः समीचीनः रजते शीशविभ्रमे जाते सति

इदं शीशं रजतं न अत्र हि रजते रजतत्वस्य य: निषेध: स प्रातिभासिक: ।
प्रातिभासिकस्य निषेधस्य प्रतियोगिन: रजतत्वस्य मिथ्यात्वं नास्ति अत:
अर्थान्तरता च स्यात् । समाद्वैतसिद्धिकारा: आहु: न तावन्निषेध तात्त्विक-
त्वादि विकल्पै: स्वरूपेण निषेधन वेति विकल्पैश्च प्रतिपादितानां दूषणा-
नामत्र प्रसर इति तु पूर्वमेव निरूपितम् ।काल इव देशेऽपि प्रतियोगितदभावयो:
सहभावात् ,एवमपि प्रागभावसत्त्वेनोपादनत्वोपपत्ते: ।एतेन मिथ्यात्वानुमिते:
श्रुतेश्च प्रामाण्यमपि नित्योहं सिद्धं भवति । प्रतिपन्नोपाधिपदाभावेऽपि सत्त्वे-
न प्रतीयमानत्वस्यात्र विवक्षणान्नात्यन्तासत्त्वापत्ति: ।असतोऽपि सत्त्वेन
प्रतीयमानत्वं असदेवेदमग्र आसीदिति श्रुत्या सिद्धमिति तु न वर्णनीयम्,तत्र सदे-
वेदमिति श्रुत्यर्थाभाव एव बोध्यते,नत्वसत: सत्त्वम्, विरोधादित्येवाङ्गीकर-
णीयतया दोषाभावात् । ब्रह्मवच्छुक्तिरूपमितत्वाभावेन तु न पारमार्थिकत्वसिद्धि-
रिति प्रथममिथ्यात्वप्रकरणएव निरूपितमिति न कोऽपि दोष: इतितथा च
आहु तरङ्गिणीकारा: तथाहि - भावाभावयोर्विरोधव्यवस्थाया एवोच्छेदापत्त्या
घटादि प्रत्यक्षताकाले घटाभावादेरप्रत्यक्षतानुपपत्त्या कपालादिकं सदा घटाभा-
ववदिति ज्ञानस्याप्रमात्वव्यवहारानुपपत्त्या द्वैताद्वैतयोरविरोधापत्तिप्रयुक्ताद्वैत
ज्ञाननिष्ठद्वैतज्ञाननिवर्तकतानुपपत्त्या च प्रत्यक्षाविरुद्धऽर्थे श्रुत्यनुमानयोस्तात्पर्य-
कल्पनाभोगेन काल इव देशेऽपि प्रतियोग्यभावयो: सामानाधिकरण्याङ्गीका-
रस्यायुक्तत्वात् ,भावाभावमात्रयो: परस्परविरोधेन विषमसत्त्वाकत्वादिवा-
ऽविरोधकल्पनस्यायुक्तत्वात्,सदेवेति वाक्यावगतस्य ब्रह्मसद्भावस्यात्यन्तासद्रू-
पस्य बोधनेऽप्यसह: सत्त्वेन प्रतीतिविषयत्वस्यानिवारणादत्यन्तासत्त्वाप-
त्तेश्च अत्यन्ताभावाधिकरण एव प्रतीयमानत्वरूपमिथ्यात्वोपपादनासंभव इति ।

पन्चम मिथ्यात्वलक्षणनिरास: :-----

इदानीं आनन्दबोधाचार्यं सम्मतं पन्चमं मिथ्यात्व लक्षणं विमृश्यते । सद्विविक्तत्वं वा मिथ्यात्वं अर्थात् सद्भिन्नत्वं प्रमाणसिद्धमेव वस्तु दोषाजन्यमेव ज्ञानं प्रमाणं भवति । अत: प्रमाणसिद्धवस्तुन: यद्भिन्नं भवति तस्यैव मिथ्यात्वं सिद्धं भवति ।अत: प्रमाणसिद्धभिन्नत्वेन प्रपन्चस्य मिथ्यात्वमायाति। यथा स्वप्ने दृष्टा: गजस्थतुरगादय: । प्रमाणसिद्धत्वस्य अयमपि अर्थ भवितुमर्हति प्रमाणसिद्धत्वं अबाध्यत्वं व्याप्यत्वमिति , श्री आनन्दबोधाचार्य: (न्याय दीपावली पृ०१) ग्रन्थे इदमुक्तवान् सत्यतिविवेकस्य मिथ्याभावस्य साध्यत्वात् नाप्रसिद्धविशेष्यता नापि सिद्धान्तोऽपि,सत्यमबाध्यं,बाध्यमिथ्या इति तद्विवेक:। प्रतिपन्ने हि धर्मिणि न्याय प्रवृत्ते प्रमाणप्रतिपन्ने सत्यसमर्थविशेषणत्वात् नाप्रसिद्धविशेषणताऽपि । अर्थात् सत्यभिन्नत्वरूपं मिथ्यात्वं उक्तानुमाने साध्यत्वेन विवक्षितं अत: नाप्रसिद्धविशेषता नाप्यपसिद्धान्तता।येन केनापि प्रकारेण ज्ञातमात्रे पक्षे न्यायप्रयोग: प्रवर्तते अत: पक्षे प्रमाणसिद्धत्वविशेषणं व्यर्थ अत: सामान्यतं प्रतिपन्नतया प्रपन्चरूपस्य विशेषस्य पक्षत्वं प्रसिद्धं अप्रसिद्धविशेष्यतापि दूषणं न भवति, अत्र हि आनन्दबोधाचार्याणां अयमाशय: अखण्डाकारचरमवृत्तिरूपं ज्ञानं वस्तुत: प्रमाण ज्ञानं यत: तस्य विषय: ब्रह्म सर्वथा अबाधितं अत: अबाध्यत्व सत्यत्वं व्यापको धर्म: प्रमाणसिद्धत्वन्च व्याप्यो धर्म: । प्रपन्चे अबाध्यत्वरूपस्य व्यापकस्य अभावे प्रमाणसिद्धत्वस्या भाव: अर्थात् प्रमाणसिद्ध भिन्नत्वं पर्यवस्यति ।`अत: न्यायामृतकारेण प्रपन्चे प्रमाणसिद्धत्वं स्वीकृत्य यद्दूषणमभिहितं तत्सर्वं निर्मूलमेव ।

अतः एवं प्रकारेण आनन्दबोधाचार्यसम्मतं यद्भिन्नत्वरूपं मिथ्यात्वं सिद्धं भवति, किन्तु अतिव्याप्ति दोष दुष्टमिदं लक्षणम् । लक्षणं च तदेव समीचीन भवति यत् अव्याप्ति,अतिव्याप्ति असम्भव एतत् त्रितय दोष शून्यं तथाहि सद्भिन्नं मिथ्यात्वं यदि मिथ्यात्व लक्षणं स्वीक्रियते तदा खपुष्पादौ अस्ति लक्षणस्य अतिव्याप्तिः अथ च निर्धर्मके ब्रह्मण्यपि लक्षणमति व्याप्तं यतः शुद्धस्य ब्रह्मणः निर्धर्मकत्वात्,शुद्धं ब्रह्मणि कोऽपि धर्मः न स्वीक्रियन्ते,अतः तत्रापि लक्षणं मिथ्यात्वलक्षणं गमिष्यति । सद्विविक्तत्वमेतल्लक्षणघटकीभूतविषये अद्वैतसिद्धिकाराः[1] इत्थं वदन्ति । सद्विविक्तत्वमित्यत्र सत्त्वदेव प्रमाणसिद्धत्वं विवक्षितम् । प्रमाणत्वञ्च दोषासहकृतज्ञानकरणत्वम् । तेन स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्ध्यति । प्रमाणसिद्धत्वञ्च अबाध्यत्वव्याप्यमित्यन्यदेतत् । ब्रह्मणि शशशृङ्गादौ चाति व्याप्ति वारणार्थं सत्त्वेन प्रतीत्यर्हत्वं विशेष्यते । तथा च सत्यरूपधर्माभावेऽपि ब्रह्मणः सद्रूपत्वसिद्धिस्तथा प्रथममिथ्यात्वनिरूपणावसरे स्पष्टमेव प्रतिपादितम् । विकल्पत्रयमपि नास्माभिरङ्गीकृतमिति नोक्तदूषणानामत्रावकाशः । अत्यन्तासत्त्वापत्तिरपि परिहृतप्रायैवेति तदेतत्तरङ्गिणीकाराः न क्षमन्ते प्रमाणसिद्धत्वस्याबाध्यत्वव्याप्यत्वमिति यदुक्तं तन्न संगतम्,प्रमाणसिद्धस्यापि ब्रह्मणोऽबाध्यत्वात् ,प्रमाणासिद्धस्यापि प्रपञ्चस्य बाध्यत्वात् । एवं च प्रमाणसिद्धत्वे अबाध्यत्वव्याप्यत्वाभावात् अबाध्यत्वव्याप्यत्वविशिष्टत्वस्य निरूपयितुम् शक्यत्वात्, केवलप्रमाणसिद्धभिन्नत्वस्य विलक्षणे ब्रह्मणि व्यभिचारात् । प्रमाणसिद्धे उपहितब्रह्मण्यपि तद्भिन्नत्वाभावादव्याप्तेर्भागासिद्ध्यापत्तेः,अविचारूपदोषकरणतानिरूपकान्यधीविषयान्यत्वस्य शशशृङ्गेऽभावेनैव तत्रातिव्याप्तिवारणसंभवे असति दोषावारणार्थं सत्त्वेन प्रतीत्यनर्हत्वनिवेश इति ग्रन्थस्याप्ययुक्तत्वान्नोक्तरूपमपि मिथ्यात्वमिति ।

---

१- अद्वैतसिद्धिः-पृ० २०७ ।।　　२- न्यायतरङ्गिणीटीकायाम्-२०७।।

अतएव वेदान्तदेशिकेनापि मिथ्यात्वलक्षणे सप्त विकल्पाःउद्भाविताः। तथाहि किमिदं मिथ्यात्वमभिप्रेतम् ?(१)किं तुच्छत्वम्(२) उत अन्यथाख्यातिविषयत्वम् (३) उत सदसद्विलक्षणत्वम् (४) अथ प्रतिपन्नोपाधौनिषेधप्रतियोगित्वरूपं बाध्यत्वम् (५) अथवा स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वम् (६) यद्वासत्यब्रह्मविलक्षणत्वम् (७) यद्वा अन्यदेव किंचिदिति । नाद्यः,प्रतीतिविरोधात्,अपसिद्धान्ताच्च । अतएव न द्वितीयः ,मिथ्यात्वाध्यासादिविषयतया सिद्धसाधनत्वाच्च । शुक्त्यादिरेव हि रजताद्यात्मना ऽन्यथाख्यातिविषय इत्यभ्युपगम्यते । अथाऽऽरोपितत्वेनविषयत्वमिष्येत् ,तथाऽपि सिद्धसाधनता,सर्वस्यापि वस्तुनो यत्र क्वचित् येन केनचिदारोप्यमाणत्वात्। न तृतीयः,परं प्रति अप्रसिद्धविशेषणत्वात् । अपि चासिद्धम तदिति चेन्न, तस्याः स्वाकारे दूषयिष्यमाणत्वात् ।

न चतुर्थः ,तद्धि बाध्यत्वम् , बाध्यम् अबाध्यं वा ? पूर्वत्र , सिद्धसाधनत्वम्,तस्य प्रपञ्चसत्यत्वाविरोधित्वात् । उत्तरत्र किं ब्रह्मस्वरूपम् उततो भिन्नम ? आद्ये सिद्धसाधनत्वम्, ब्रह्मसम्बन्धस्याख्याभिरिष्यमाणत्वात् । बाध्यत्वधर्मयोगो हि प्रपञ्चस्य साध्यते,बाध्यत्वं च ब्रह्मस्वरूपमित्यभिधत्से ।द्वितीये तेनैव दृश्यत्वहेतोरनैकान्त्यम् । तेनैव हेतुना तत्सिद्धयासिद्ध्यौनानैकान्त्यमिति चेन्न,तेनैव तत्सिद्धावनैकान्त्यः प्रसङ्गःतदसिद्धौ हेतोरसाधकत्वमिति प्रसङ्गपर्यवसितत्वात्,तेनैव तत्सिद्धौ तत्साधनस्य सतः कथमनैकान्त्यम् । नहि तत्साधकत्वे तत्साधकत्वप्रसङ्ग इत्युन्मत्तोऽपि ब्रूयादिति चेन्नअभिप्रायानभिज्ञानात् ,न हि तत एव तत्सिद्धिमभ्युपगम्यानैकान्त्यं ब्रूमः,अपितु अबाधिते बाध्यत्वे दृश्यत्वहेतुर्वर्तत इति भवताऽभ्युपगतत्वेन तथाभ्युपगमे अन्यतरानैकान्त्यप्रसङ्गः इति,तर्हि तत्र दृश्यत्वहेतुर्निवर्तत इत्यभ्युपगम्यानैकान्त्यं परिहरिष्याम इति चेत् तदा दृश्यत्वानुमानेन तत्साधनं न शक्यते । तज्जनितज्ञानविषयत्वे तस्य दृश्यत्वावश्यम्भा-

वात् । अतोऽनुमानमेव परित्यज्यानैकान्त्यं परिहर्तुमर्हसि । ननु बाधितस्याबाधितस्य च साधारणम् बाध्यत्वमात्रं साध्यत इति चेन्न, तथाऽपि सिद्धसाधनत्वात्, बाधितबाध्यत्वमभ्युपगच्छता साधारणाकारस्याभ्युपगमात् । पक्षधर्मताबलादस्मदभिमतविशेषलाभ इति चेन्न, तस्याः तद्विरुद्धत्वात् । अविरोधेऽपि पूर्वोक्तानैकान्त्यस्य स्थितत्वात् ।

न पञ्चमः, प्रत्यक्षादिसिद्धार्थे तदभावग्रहासम्भवात् । श्रुतीनामपि निर्दोषाणामन्यत्र व्यवस्थापनात् । अतएव योग्यानुपलब्धिनिराकृतसद्भावस्य तदभावस्यानुमानेन साधयितुमशक्यत्वात् । कृत्स्नप्रत्यक्षापरोधे च निर्मूलतयाऽनुमानप्रामाण्यस्यैवासम्भवात् । तदभ्युपगमे च स्वोक्तिविरोधात् । परसिद्धान्तस्थिरीकरणाच्च । अप्रमाणेन बाधितस्यापि सत्यत्वे अस्मदुक्तिमात्रेणापि तद्दूषणस्य दुर्वारत्वात् ।

नापि षष्ठः सिद्धसाधनादेव । सर्वं ब्रह्मात्मकमिति भास्करादिभिरिव त्वयाऽपीष्यत इति चेन्न, तदपृथक्सिद्धिमात्रेणास्माभिस्तदुक्तेः । तथाऽपि सत्यभूतब्रह्मव्यतिरेकसाधनात् असत्यत्वं फलतीति चेन्न, स्वयमपि सत्यस्य सत्यान्तरव्यतिरेकमात्रेणासत्यत्वप्रसङ्गाभावात् । एवं घटस्य घटान्तरव्यतिरेकेऽपि न ह्यघटत्वम् । ब्रह्मैकमेव सत्यमिति सिद्धे तद्व्यतिरेकसाधनेनैवासत्यत्वं सिद्ध्यतीति चेन्न, आत्माश्रयप्रसङ्गात् । अवधारणेन हि प्रपञ्चासत्यत्वं विवक्षितम्, तत एव च तत्सिद्धिरिति । श्रुतिसिद्धब्रह्ममात्रसत्यत्वोपजीवने अनुमाननैरर्थक्यप्रसङ्ग, अन्ततः श्रुतेरेव पुरस्करणीयत्वात्, तस्याश्च निरपेक्षत्वात् । विप्रतिपन्नं प्रति अनुमानं सप्रयोजनमिति चेन्न, श्रुतिप्रामाण्यानिच्छतः तदुपजीवनासंभवात्, इच्छतस्तस्यैव तत्सिद्धेः । श्रुतेश्च प्रत्यक्षाद्यविरोधविषयत्वे सिद्धे, सा कथं प्रत्यक्षादिबाधकानुमानस्योपजीव्या ? ननु सत्यमिति केनचित् सामान्यतो निश्चित्य तद्व्यतिरेकः साध्यत इति चेन्न, प्रत्यक्षादिभिस्तन्निश्चये प्रपञ्चस्यैव सत्यतया तस्या

तथतिरेकसाधनायोगात् । ततस्य शास्त्रनिश्चितसत्यव्यतिरेकसाधनेऽपि तस्य सत्यान्तरमात्रं सिध्येत् । सत्यत्वात्यन्ताभावः साध्य इति पक्षोऽप्येवमेव दोषो ग्राह्यः ।

नापि सप्तमः, तत् किं लौकतः शुक्तिरजतादिषु विधातुम्, आपणिक रजतादिषु निषेद्धुं च शक्यं किंचित्, अथाशक्यमिति, नप्रथमः, प्रत्यक्षादिभिर्बाधस्य दुर्निवारत्वात् । न द्वितीयः, तस्याप्रसिद्धत्वात् । तथाविधस्य कस्यचिदन्यस्यसाधने तेनाप्युपटितस्य प्रपन्चस्याक्षतत्वेनानिष्टाभावात् । एवं प्रत्यक्षबाधे निरूपते सति अर्थापत्यभावयोः पृथक् प्रामाण्यमिच्छतां ताभ्यामपि बाधः सिद्धः । अबाध्यत्वलक्षण व्यवहाराविसंवादान्यथानुपपत्त्या सत्यत्वसिद्धिः । अभावोऽपि प्रपन्चस्य बाध्यत्वाभावाख्यं सत्यत्वं प्रकाशयन् बाधत एव। नचात्र योग्यानुपलब्धि नास्तीति वाच्यम्, योग्यत्वस्योपपादित्वात् । न हि लौकसिद्धमिथ्यात्वादन्यत् किमप्ययोग्यं मिथ्यात्वमस्ति । न चानयोः श्रुति बाधः, तदान्यपर्यस्थापनात् ।

:o:-------:o:

## द्वितीयोऽध्याय:

### प्रपञ्च सत्यत्वेऽनुमान प्रमाणम्

प्रत्यक्षप्रमाणस्य वर्तमान मात्र ग्राहित्वात् प्रतिपन्नोपाधौ-त्रैकालिकनिषेध प्रतियोगित्वरूपं मिथ्यात्वम् प्रत्यक्षप्रमाणेनानाक्रान्तुं शक्यते। यत: "सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना इति वचनानुरोधात् । यदि च प्रत्यक्षप्रमाणेन मिथ्यात्वं गृहीतुं शक्यते चेत् तर्हि वादिनां तत्र विवादो न स्यात्। "न हि दृष्टेरनुपपन्नं नाम किञ्चित्" अस्ति च तत्र वादिनां विवाद: । अत: मिथ्यात्वं प्रत्यक्षस्य विषयो न भवितुमर्हति । मिथ्यात्वेऽनुमानञ्चेत तर्हि सत्यत्वेऽप्यस्ति अनमानम् प्रपञ्च: सत्य: प्रमाणसिद्धत्वात् आत्मवत् इत्यनुमानं प्रपञ्च सत्यत्वे प्रमाणम् ।" अयं घट: एतन्निष्ठबाध्यभेदातिरिक्तभेदाश्रय: द्रव्यत्वात् पटवत् ,इत्यनुमानत: वियदादेरात्मनां च सत्यभेदसिद्धि: । अपि प्रत्यक्षस्य भिन्नविषयत्वादिना बाधाक्षमत्वेऽपि अनुमानमेव मिथ्यात्वबाधकम् भवति । यत: द्वयोर्भिन्नविषयकत्वात् । समानविषयक प्रमाणानामेव बाध्य-बाधक भावो भवति । तथैव तथैव प्रपञ्चगत व्यावहारिक सत्त्वाकाहि प्रत्यक्षं पारमार्थिक सत्वनिषेधकस्यानुमानस्य च आगमप्रमाणस्य च बाधकं न भवति । यत: समान विषयकत्वाभावात् । तथापि प्रपञ्च मिथ्यात्वानुमानस्य विरोधे संक्षममनुमानं प्रदर्श्यते ।तथाहि ब्रह्मप्रमान्येन वेदान्ततात्पर्यप्रमितिजन्यज्ञानान्येन वा अबाध्यत्वे सत्यसत्त्वानधिकरणत्वे सति ब्रह्मान्यत्" विमतं वा, सत्,परमार्थ-सद्वा ,प्रातिभासिकत्वानधिकरणत्वे सत्यसद्विलक्षणत्वाद्,ब्रह्मवत्,व्यतिरेकेण शशश्रृङ्गवदिति ।

उक्तानुमानस्य अयमाशय: यत् ब्रह्मप्रमान्येन,अथवा वेदान्ततात्पर्यं प्रमितिजन्य प्रमान्येनाथवा,मोक्षसाधनभूत प्रमाभिन्न इन्द्रिनन बाधितं न भवति । एवं असत्त्वानधिकरणब्रह्मभिन्न व्यावहारिक प्रपन्च:,अथवा विवादास्पदीभूत: प्रपन्च: सत् परमार्थसत् रजतादि प्रातिभासिक विलक्षणत्वम् खपुष्पादिसत् विलक्षणत्वात् यथा ब्रह्म,यन्नैवं तन्नैवं यथा शशशृङ्गम् ।एवं प्रकारेण व्यतिरेकि उदाहरणं दीयते । अत्र न्यायामृतकारै: त्रिधा पदास्य निर्देश: कृत: ।

(१) ब्रह्मप्रमान्येनावाध्यत्वे सत्यसत्त्वानधिकरणत्वे सति ब्रह्मान्यत् । (२) वेदान्ततात्पर्यप्रमाजन्यज्ञानान्येनाबाध्यत्वे सत्य सत्वानधिकरणत्वे सति ब्रह्मान्यत् (३) मोक्षहेतुज्ञानान्येनावाध्यत्वेसति असत्त्वानाधिकरणत्वे सति ब्रह्मान्यत् । तत्र शुद्धं ब्रह्म वृत्ति व्याप्यं भवति इति विवरणाचार्य: स्वीकरोति । किन्तु भामतीकारमते अखण्डाकार वृत्ति: ब्रह्म प्रमा न भवति । यत: भामतीकार: शुद्धं ब्रह्म वृत्ति व्याप्यं न भवति इति मन्यते । अत: वेदान्ततात्पर्यप्रमाजान्यप्रमापदेन निर्विकल्पक बोधस्य निर्देश कृत: वर्तते । एवं शाब्दबोधे तात्पर्य ज्ञानं कारणं न भवति । एवं ये आचार्या: मन्यन्ते तेषां मतानुसारेण मोक्ष हेतुज्ञानपदेन निष्प्रकारिका प्रमा अभिधीयते ।असत् पदार्थेषु व्यभिचारवारणाय असत्त्वानधिकरणमुक्तम् । तथा च प्रतिभामुक्तम् । एवन्च असति व्यभिचारवारणाय असत् विलक्षणत्वमुक्तम् । अनेनानुमानेन प्रपन्चे पारमार्थिकं सत्त्वं साध्यते ।

एवं न्यायामृतकारेणप्रपन्चे षड्भि: हेतुभि: पारमार्थिक सत्त्वं साध्यते ।तथाहि विमतं पदार्थ सत् (१) प्रातिभासिकत्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वात् (२) प्र अनिषेध्यत्वेन प्रमां प्रति साक्षात् विषयत्वा (३) अनिषेध्यत्वेनेश्वरं प्रति साक्षादपरोक्षत्वात् (४) सप्रकारकावाध्यार्थक्रियाकारित्वात्, (५) आरोपितमिथ्यात्वकत्वात् (६) कल्पकरहितत्वाच्च इति।

एवं प्रपञ्चसत्यत्वसाधकं द्वितीयानुमानमुच्यते तथाहि विमतं न सद्विलक्षणं असद्विलक्षण त्वादात्मवत् । अयं भाव: विश्वस्य निर्वचनं सदसद कोटिभ्यां भवितुमर्हति । तथा च यत् सत् न भवति तत् असत् एवं यत् असत् न भवति लोके तत् सदुच्यते अत: जगत् सत् भिन्नं न भवितुमर्हति,यत: असत् भिन्नत्वात् यथा आत्मा, एवमनुमानप्रयोगेण असद्विलक्षण्यं तथा च सत्त्वं साधयितुं शक्यते ।

तथा च प्रपञ्च सत्यत्व साधकं तृतीयानुमानमपि उच्यते तथाहि विमतं न चैतन्या ज्ञानकार्यं,न तत्कार्यं धी विषय:,न तत्कार्यं सत्त्ववत् न तज्ज्ञानबाध्यसत्त्ववद्वा ,तस्मिन् अपरोक्षे ऽपि अनिवर्ध्यत्वेन साक्षात् भासमानत्वात् यदेवं तदेवं यथा घटेऽपरोक्षे ऽपि अनिवर्ध्यत्वेन साक्षात् भासमानमान: पटो न घटाज्ञानकार्यादि: विपक्षे च तदाऽपरोक्षेतदाज्ञानव्याहतिरेव बाधिका न चासिद्धि: । अधिष्ठानतया सुख द्विसादित्वेन च इदानीमपि चैतन्यापरोक्षात् ।अयमाशय: विवादास्पदीभूत: प्रपन्च: चैतन्यस्याज्ञानकार्यं अथवा चैतन्याज्ञानजनितज्ञानविषय: अथवा चैतन्याज्ञा न जनित सत्तावान्, अथवा चैतन्य ज्ञानेनबाधित सत्तावानन भवति ।अत: चैतन्यस्यापरोक्षज्ञानेसत्यपि अनिवर्ध्यत्वेन साक्षात् भासमान: यस्य अपरोक्ष: ज्ञाने सति य: अनिवर्ध्यत्वेन न साक्षात् प्रतीयमान: भवति । सतस्याज्ञानस्य कार्यादि: न भवति । यथा घटस्यापरोक्षबोधे सत्यपि अनिवर्ध्यत्वेन साक्षात्प्रतीयमान: पट: घटस्य अज्ञान कार्यादि न भवति । अत्र हि विपक्षे बाधकतर्कोऽपि वर्तते ।यदि चैतन्यापरोक्षेऽपि चैतन्याज्ञानं तत्कार्यं चानिवर्धत्वेन साक्षात्प्रतीयेत तर्हि ज्ञानाज्ञानयो: विरोध: उच्छिद्येत । प्रपन्च: प्रतीतिकालेऽपि घट: सन् इत्थं घटादे अधिष्ठानरूप चैतन्यस्य एवं सुषुप्तिकालेऽपि सुखमहमस्वाप्सम् । एवं रीत्वा सुखादिसाक्षिरूपस्य चैतन्यस्य अपरोक्षबोध स्वीक्रीयते ।अत: पक्षे हेतोरसिद्धिरपि

नास्ति एवं न्यायामृतकारेण अस्मिन् अनुमानप्रयोगे पञ्च साध्यानां निर्देश: कृत: वर्तते । (१) न चैतन्याज्ञान कार्यम् (२) न चैतन्याज्ञानकार्यधीविषय: (३) न चैतन्याज्ञानकार्यसत्त्ववत् (४) न चैतन्याज्ञानबाध्यसत्त्ववत् (५)न चैतन्यज्ञानबाध्यम् । एषु अद्वैतसम्मत प्रपन्चगत ब्रह्माज्ञानकार्यत्वस्य निषेध:प्रथम:, वृत्तिज्ञानमात्रस्य विषयता द्वितीय: ।अज्ञानजन्य व्यावहारिक सत्त्वस्य निषेध: तृतीय: । ब्रह्मज्ञानबाधित व्यावहारिकसत्त्वस्य निषेध: चतुर्थ: ।तथा च ब्रह्मज्ञानबाधितत्वस्य निषेध: पन्चमे साध्ये कृत: वर्तते ।

प्रपन्चसत्यत्वसाधकचतुर्थानुमानं,विमतं नात्मन्यध्यस्तं आत्मसाक्षात्कारवत् प्रवृत्तिविषयत्वात् यदेवं तदेवं यथा घटसाक्षात्कारवत् प्रवृत्तिविषयो घटो न तत्राध्यस्त: न चासिद्धि: ईशजीवन्मुक्तयोरात्मसाक्षात्कारवतोऽपि जगद्रक्षाभिक्षाटनादौ प्रवृत्ते: ।शंखे अध्यस्तमपि पीतत्वं न शंखचैतन्यसाक्षात्कारवत् प्रवृत्ति विषय इति न तत्र व्यभिचार: इति । एवं विवादास्पदीभूत: प्रपन्च: नात्मनि अध्यस्त: वर्तते ।यत: आत्मन: यै: आत्मन: साक्षात्कार: कृत: एवं ईश्वरस्य तथा जीवन्मुक्त शुकदेवापि महापुरुषादे: प्रवृत्ति विषय: भवति । यस्य वस्तुन: साक्षात्कारे जातेऽपि द्रष्टु: पुरुषस्य यस्मिन् पदार्थे प्रवृत्तिर्दृश्यते स पदार्थ: तस्मिन् वस्तुनि नाध्यस्तो भवति । यथा घटस्य साक्षात्कर्तु: पुरुषस्य पटे प्रवृत्ति: भवति ।अत: स पट: कदापि घटे अध्यस्तो न भवति । एवं प्रपन्चरूपे पक्षे उक्तस्य हेतोरसिद्धिर्नास्ति । यत: तत्त्वदर्शिन: परमेश्वरस्य जागद्रक्षाणे तथा शुकवामदेवादि जीवन्मुक्त महापुरुषादेरपि भिक्षाटनादौ प्रवृत्ति: प्रसिद्धा अस्ति । किन्तु यस्य पुरुषस्य शंख साक्षात्कार: जात: तस्य शंखाध्यस्तपीतरूपादि व्यवहारे कदापि प्रवृत्तिर्न भवति ।अत: प्रकृतस्य हेतो:विपक्षे अवृत्तितया अव्यभिचारित्वात् ।

प्रपन्च सत्यत्वसाधकं पन्चमानुमानं तथाहि विमलं न ईश्वर मायाकल्पितं तं प्रत्यपरोक्षत्वात् यदेवं तदेवं यथा चैत्रप्रत्यपरोक्षो घटो न चैत्रमाया कल्पितः । विमतं न जीवमायाकल्पितं तस्मिन् सुषुप्तेऽपि अवस्थितत्वात्, आत्मवत् न चासिद्धिः प्रत्यभिज्ञानात्,अदृष्टादेरभावे पुनरुत्थानायोगाच्च । अयमाशयः विवादास्पदीभूतः प्रपन्चः न ईश्वरमाया काल्पितो भवितुमर्हति यतः ईश्वरं प्रत्यपरोक्षत्वात् । यः पदार्थः यस्य पुरुषस्य अपरोक्षःभवति स पदार्थः तस्य पुरुषस्य मायया कल्पितो न भवति । यथा चैत्रप्रत्यपरोक्षः घटः न चैत्रमाया कल्पितः । एवमपि एवं प्रकारेण इदमपि वक्तुं न शक्यते । विवादास्पदः प्रपन्चः न जीवमायाकल्पितः ।यतो हि सुषुप्तावस्थायां जीवस्य विलीनेऽपि अवस्थितत्वात् यथा ब्रह्म सुषुप्तिकाले प्रपन्चेऽपि विलीनी भवति। इत्थं न वक्तुं शक्यते ।यतः घटादि प्रपन्चस्य सुषुप्तौ अभाव स्वीकृतेसति सुषुप्तादुत्थितस्य जीवस्य सोऽयं घटः इत्येवं प्रत्यभिज्ञा कथं स्यात् । एवं च सुषुप्तावस्थायां जीवोत्थापकादृष्टादि प्रपन्चस्य विलयेसति सुषुप्ताद् कदापि जीवस्योत्थानं न भविष्यति ।अतः सुषुप्तावस्थायामपि अदृष्टादीनामवस्थितिः स्वीकरणीया ।

अधुना प्रपन्च सत्यत्व साधकं षाष्ठानुमानं निर्दिश्यते । मिथ्यात्वं आत्मान्य सर्ववृत्ति न मिथ्यामात्र वृत्तित्वात्,शुक्तिरूप्यवदिति । अस्यानुमानस्यायमाशयः मिथ्यात्व रूपः धर्मः आत्मनः पृथक् समस्तेऽपि प्रपन्चे न तिष्ठति । यतो हि प्रपन्चान्तर्गत केवल मिथ्यापदार्थेष्वेव हि मिथ्यात्वं स्वीक्रीयते । यथा शुक्ति रजतत्वम्,एवं प्रकारेण प्रपन्चस्याधिकभागः मिथ्यात्वशून्यः सिद्धः ,तत्रापि यदि दृश्यत्वादि हेतवः स्युः तदा सर्वे दृश्यत्वादि हेतवः व्यभिचारिदोष दुष्टा भवन्ति ।अतः तत्र मिथ्यात्वानुमानं कथं भविष्यति ।

प्रपन्चसत्यत्वसाधकं सप्तानुमानम्, आत्मा परमार्थ सदन्य:, परमार्थत्वात् , अनात्मवत् ,न च कल्पित आत्मप्रतियोगिक भेदेनार्थान्तरम् कल्पित मिथ्यात्वेन मिथ्यात्वानुमानेऽपि सिद्धसाधनतापत्ते: । समन्वप्रकारन्च इत्यमात्मा परमार्थ प्रपन्चाद् भिन्न: यत: पदार्थ त्वात् । यथा अनात्मवस्तु अर्थात् यथा घटादय: अनात्म पदार्था: परमार्थ सद्रूपादात्मन: भिन्ना:सन्ति तथैव आत्मापि परमार्थसद्रूपात् घटादि प्रपन्चाद् भिन्न: भविष्यति ।अत: घटादय: प्रपन्चा: पारमार्थिका: यदि उच्येत् आत्मन्यपि आत्मन: काल्पनिक: भेद: स्वीक्रीयते । ब्रह्मभेदस्य परमार्थरूप: आत्मैव प्रतियोगिरस्ति,अत: अस्यानुमानस्य एतावन्मात्रं उद्देश्यमस्ति यत् भेद प्रतियोगिन: पारमार्थिक सत्त्व साधनं तद् आत्मसत्यतयैव सिद्धं भविष्यति । फलत: अनेनानुमानेन प्रपन्चे पारमार्थिक सत्त्वं न सिद्धं भविष्यति । आत्मन: परमार्थ सत्त्व सिध्यैव अर्थान्तरम् नामकं निग्रहस्थानं उपस्थितो भवति । तन्नैव वक्तुं शक्यते यत: एतदेवदूषणं अद्वैतिवादिनामते प्रपन्चमिथ्यात्व साधके प्रपन्चो मिथ्या दृश्यत्वाद् अस्मिन् मिथ्यात्वानुमानेऽपि दातुं शक्यते ।यत: काल्पनिक मिथ्यात्वमादाय इदमनुमानं गतार्थं स्यात् । वास्तविकं मिथ्यात्वं न सेत्स्यति अत: प्रपन्चस्य सद्रूपत्व स्थिरैव । अत: अर्थान्तरतानामकं दूषणं ,पक्ष द्वयेऽपि संभवात् । नास्माकं मते किमपि दूषणं उक्तं हि कुमारिक भट्टेन (श्लोक वार्तिके पृष्ठ० ३४१) तथाहि—

तस्माद् यत्रो: समो दोष: परिहारोऽपिवासम:।[१]
नैकस्तत्र नियोक्तव्यस्तादृगर्थविचारणे ।। इति ।।

---

१- श्लोक वार्तिके पृ०सं० —४३४१ ।।

प्रपन्चसत्यत्वसाधकमष्टमानुमानं ,आत्मा,यावत्स्वरूपमनुवर्तमाना-नात्मवान्,यावत् स्वरूपमनुवर्तमानभावरुपानात्मवान् वा , स्वाज्ञानाबाध्या-नात्मवान् , स्वज्ञानाबाध्यभावरुपानात्मवान् वा, पदार्थत्वात्,भावत्वाद्वा घटादिवदिति । अत्र हि पन्चमप्रकाराविद्यानिवृत्यभ्युपगमपक्षे सिद्धसाधन परि-हाराय साध्ययोर्भावरुपपदमनात्मविशेषणम् । अस्यायमाशय: आत्मा कदापि एकाकी न भवति । यतोहि"एकाकी न रमते" इयं श्रुति: वर्तते । सदैवात्मा द्वैतस्यरङ्गस्थले लीलाविलास करोति, आत्मा यदि सदातन: वर्तते तदा द्वैता-ख्यस्य जगतोऽपि त्रैकालिको भाव: एव स्वीकरणम् भविष्यति । न त्रैकालिको-ऽभाव: इममेवाशयमभिप्रेत्य इदमनुमानमुत्थितं अस्ति । १- आत्मा एवं भूतेन अनात्मपदार्थेन स: संवलितो भवति । य: आत्मन: यावत् स्वरूपमनुवर्तमान: भवति अथवा २- आत्मा यावत् सुवरुपमनुवर्तमानभावरुपद्वैतेन युक्त: ।अथवा ३- स्वज्ञानेनाबाधितअनात्मप्रपन्चेन युक्त: अथवा ४- आत्मा स्वज्ञानेनाबाधित-भावरुपानात्मप्रपन्चेन युक्त: पदार्थत्वात्,अथवा भावपदार्थत्वात् यथा घटादि एवं इष्टसिद्धिकारादय:कैवन् आचार्यं अविद्या निवृत्तिं पन्च प्रकारान् मन्यन्ते तथाहि न सत्,नाप्यसत,नाप्यसदसत,नाप्यभावाभाव एवं चतुष्टयकोटिविनि-र्मुक्तामविद्यानिवृत्तिं स्वीकुर्वन्ति उक्तन्च आनन्दबोधाचार्य: ---

न सन्नासन्न सदसन्नोभयो[१] नापि तत्क्षय: ।
यदानुरुपो हि बलिरित्याचार्याव्यचीचरन् ।।

---

१- न्या०म०पृ० -३३५ ।।

एवमविद्यानिवृत्ती सिद्धसाधनतारूपदोषवारणाय टिप्पणि एवं चतुर्थे साध्ये भावरूपत्वमनात्मपदार्थस्य विशेषणं दत्तम् ।

प्रपञ्च सत्यत्वसाधकविशेषानुमानानि :---

एवञ्च प्रपञ्चसत्यत्वसाधकविशेषानुमानमेव प्रपञ्च मिथ्यात्वस्य बाधकं भविष्यति । तथाहि आत्मधी न स्वविषयकधीबाध्या, धीत्वात्, शुक्तिधीवत् । अयमाशय: चरमसाक्षात्काररूपमात्मज्ञानं स्वविषयविषयक स्वान्तिमक ज्ञानद्वारा बाधितं न भवति । यतो हि ज्ञानमस्ति ज्ञानत्वादेव हेतुना अस्य बाधो न युक्त: । यथा शुक्ति ज्ञानं । काँतु कतकरजादय: कियत: पदार्था एव भवन्ति, ये स्वेनापि बाध्यन्ते । किन्तु ज्ञानमात्रस्यायम् स्वभाव: यत् स्वेन तस्य बाधो न जायते ।अत: मोक्षावस्थायामपि अखण्डाकारवृत्तिरूप: अनात्मपदार्थ: अनादित: एव स्वीकरणीय: । एवं अस्य प्रसिति मिथ्यात्वानुमानस्य अन्यदपि प्रपञ्चसत्यत्वसाधमनुमानं भवितुमर्हति । तथाहि आत्माधिष्ठानकभ्रमहेतु: न स्वकार्यभ्रमाधिष्ठानज्ञानबाध्य: भ्रमहेतुत्वात् यदेवं तदेवं यथा शुक्त्यधिष्ठानकभ्रमहेतु: काचादि: । अस्य अयं भाव: यत् अद्वैतवादिन: एवमन्यन्ते यद् भ्रमबाधकाधिष्ठानसाक्षात्कारद्वारा भ्रमहेतुभूतस्याज्ञानरूपस्य दोषस्यापि बाधो भवति ,तन्नसमीचनम्,यत: तद्विरोधि इदमनुमानमुक्तं भवति यत् आत्माधिष्ठानक प्रपञ्चविभ्रमस्य हेतुरज्ञानादि: स्वप्रपञ्चरूपकार्यस्य अधिष्ठानभूतस्यब्रह्मण: ज्ञानेन बाधितो नभवति , यत: भ्रमहेतुत्वात् यथा शुक्तिरूपाधिष्ठानाश्रित - रजतभ्रमस्य हेतुभूत: चाकचक्यादि दोष: भ्रमाधिष्ठानज्ञानेन न बाध्यते इति ।

अपि च वादावली कारेणापि प्रपञ्चमिथ्यात्व बाधकमनुमानं स्वकीयपद्धत्या उक्तम् तथाहि- "विप्रतिपन्नं सत्यं प्रमाणदृष्टत्वात् ,एवमनेनानुमानेन मिथ्यात्वप्रतिपादकानुमानस्य विरोधी वर्तते । अतः कथमपि मिथ्यात्व साधकमनुमानं न समीचीनम् । न चोक्तानुमाने साध्यानिरुक्तिः स्यात् यतः अबाध्यताया: एव साध्यत्वात् एवं भूताया अबाध्यताया: ब्रह्मणि सिद्धत्वान्नाप्रसिद्ध विशेषणता ।

ननु अस्मिन्ननुमाने प्रमाणदृष्टत्वात् योऽयं हेतुत्वेन उपन्यस्तः। तत्किम् प्रमाणदृष्टत्वम् ? तात्त्विकप्रमाणदृष्टत्वम् ? अतात्त्विकप्रमाणदृष्टत्वं वा ? तर्हि नाद्य पक्षः समीचीनः ।न हि अस्यामद्वैतिनां मते तात्त्विक प्रमादृष्टत्वं सिद्धं, प्रत्यक्षादि प्रमाणानां तत्त्वावेदकत्वानभ्युपगमात् ।नोत्तरपक्षः समीचीनः तत्राद्वैतिवादिनां मते असिद्धेः । साध्यविकलता च दृष्टान्तस्य स्यात् इति चेन्नैवम्,प्रत्यक्षादिप्रमाणानां अतत्त्वावेदकत्वे मानाभावात्। नहि अस्माभिः द्वैतिवादिभिः प्रत्यक्षादिप्रमाणानामतत्त्वावेदकत्वं स्वीक्रियते। अपितु प्रत्यक्षादिकं तत्त्वावेदकं प्रमाणत्वात्,सत्यज्ञानादिवाक्यवत् । अन्यथा प्रमाणमेव न स्यात् । प्रपञ्चः तत्त्वावेदक प्रमाणदृष्टः , सम्प्रतिपन्नभ्रान्तपदार्थेतरत्वात् ब्रह्मवत् । यदि च उक्तानुमानेकश्चिदयं आक्षिप्येत यत् अस्मिन्ननुमाने उपाधि दूषणमस्ति । अतः उपाधि दोषा दुष्टमिदमनुमानं स्वसाध्यं साधयितुं न क्षमते । अत्र च आत्मत्वमुपाधिः । उपाधिश्च साध्यव्यापकत्वेसति साधनाव्यापकः । यत्र यत्र साध्यं तत्र तत्र उपाधिरिति दृष्टान्ते साध्यव्यापकता। एवं यत्र -यत्र साधनं तत्र तत्र उपाधिरिति पक्षे उपाधेरविद्यमानत्वात् साधनाव्यापकता । अतः आत्मत्वमुपाधिः सुदृढः इति, चेन्नैवम् यतः अबाध्यत्वादेः आत्मत्वस्यपक्षे सम्भवात्,साधनाव्यापकत्वाभावात् । नाऽयमुपाधिरिति अन्यथा

आत्मत्वस्यापि अभाव: स्यात् ब्रह्मणि । किन्च तत्त्वावेदकत्वादिविशेषानवच्छय प्रमाणमात्रदृष्टत्वमेवहेतु: किम् न स्यात् ? नहि अस्य विपक्षेवृत्ति: । वृत्तिव्याप्यतया आत्मन्यपि अभ्युपगमात् न तत्र साधनावृत्ति:।तथापि प्रामाणिकत्वातिरिक्तं सत्यत्वं नास्ति इति साध्याविशिष्टता इति चेत् न स्वपरासम्मते: । न तावत् स्वरीत्या इदमुक्तं प्रमाणाविषयस्यापि ब्रह्मणसत्यत्वाभ्युपगमात् । न च अस्मद्रीत्या ब्रह्मण इव प्रपन्चस्यापि प्रामाणिकत्वातिरिक्तस्य सत्यत्वाभ्युपगमात् । अन्यथा शशविषाणकल्पमेव जगत् स्यात् । कदापि प्रमाणाविषयं न स्यात् ,अस्ति च प्रमाणविषयम् । किन्त यदीयं जगत् भ्रान्तिकल्पितं स्यात् तर्हि कल्प्यमान जगत् सदृश: सत्याधिष्ठानप्रधानपूर्वकमङ्गीकार्यं प्रसज्येत न सत्यद्वयजगत् स्वीकारो युक्त: । यत: विन्ध्याक्याचनार्थगतस्य क्षारोतैलप्रदानप्रतिज्ञावत् अविकापाताता । अत: नैनं जगद् भ्रान्तिकल्पितं इति तर्कपराहतं इथ्यत्वानुमानमपि प्रतिकूलतर्कपराहतं इदमनुमानं प्रकारान्तरेणापि उच्यते । यत: सर्वस्यापिविश्वप्रपन्चस्य कल्पितत्वमङ्गीक्रियते अद्वैतिभि: । तन्न युक्तं प्रतिभाति । तथाहि विश्वं यदि कल्पितं स्यात् तर्हि साधिष्ठानकं स्यात् ।अधिष्ठानत्वन्च सामान्यरूपेणाज्ञातत्वेसतिविशेषरूपेणाज्ञातत्वम् । ब्रह्म तु स्वगतसजातीयविजातीय भेदशून्यं अखण्डं निर्गुणं निराकारनि:सामान्यं निर्विशेषन्च,अत: एवं भूते नि:सामान्ये निर्विशेषे ब्रह्मणि अधिष्ठानत्वं न संघटते । अधिष्ठानत्वाभावात् । कथं च ब्रह्मणि जगत: कल्पना । तत्र चास्ति प्रयोग: । प्रपन्चो न भ्रान्ति कल्पित: निरधिष्ठानत्वात् निष्प्रधानत्वात् आत्मवत् व्यतिरेकेण वा रजतवत् । एवं हेतुरस्तुसाध्यंमास्तु इति व्यभिचार शकायां जातायां आरोप्यसदृशधिष्ठानभूत सत्य जगद्‌द्वयाङ्गीकारप्रसङ्गो बाधकस्तर्क: उन्नेय: ।

अपि च यदिदं अद्वैतिभिः वक्तुं शक्यते यत् प्रपन्चो मिथ्या, दृश्यत्वात् जडत्वात्, परिच्छिन्नत्वात् शुक्तिरूप्यवदिति, मिथ्यात्वप्रतिपादकसामान्यानुमानेन यदि प्रपन्चस्य मिथ्यात्वं न सिध्यति तर्हि प्रपन्चमिथ्यात्वसाधकं मिथ्यात्वविशेषानुमानैरपि भवितुमर्हति । तथाहि मिथ्यात्वे विशेगतीऽनुमानानि (१) ब्रह्मज्ञानेतराबाध्यब्रह्मान्यासत्त्वानधिकरणत्वं पारमार्थिकसत्त्वानधिकरणावृत्ति, ब्रह्मावृत्तित्वात्, शुक्तिरूप्यत्ववत्, परमार्थ सद्भेदवच्च । (२) विमतं मिथ्या, ब्रह्मान्यत्वात्, शुक्तिरूप्यवत् । (३) परमार्थसत्त्वं, स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्ति, सदितरावृत्तित्वात्, ब्रह्मत्ववत् इति । एतेषामनुमानानां समन्वयप्रकारश्च इत्थं (१) ब्रह्मज्ञानेतरज्ञानेनाबाधितं तथा ब्रह्मभिन्न व्यावहारिक प्रपन्चय यत् असत्त्वानधिकरणता, पारमार्थिक सत्त्वस्याधिकरणे अवृत्तिः, यतः ब्रह्मावृत्तित्वात् यथा शुक्तिरजतत्वम् । अथवा यथा परमार्थसद्वस्तुनः भेदः । अत्र हि यदसत्त्वानधिकरणत्वम् पक्षत्वेन स्वीकृतः वर्तते स असत्त्वानधिकरणत्वरूपोधर्मः प्रातिभासिके, व्यावहारिके, तथा च ब्रह्मणि एषुत्रिष्वपि वर्तते । प्रातिभासिकवृत्ति असत्त्वानधिकरणत्वरूपः यदि पक्षत्वेन स्वीकृतः स्यात् तदासिद्धसाधनता, यतः तस्य पारमार्थिक सति अवृत्तिता सर्वैरभ्युपगम्यते अतः तस्य आंशिक सिद्धसाधनताख्यरूपस्यदोषानिवारणार्थं ब्रह्मज्ञानेतराबाध्यवृत्तित्वविशेषणं दीयते । ब्रह्मवृत्ति असत्त्वानधिकरणत्वं यदि पक्षत्वेन स्वीकृतो भवेत्, तदा बाधः यतः तत्र पारमार्थिक सत्त्वस्य वृत्तितैवास्ति । न हि तत्र अवृत्तितास्वीक्रियते, अतः ब्रह्मभिन्न वृत्तित्वं पक्षस्य विशेषणं दत्तम् । एवं असत्त्वाभावं पक्षं न स्वीकृत्य असत्त्वानधिकरणत्वस्य पक्षा स्वीकारे इदं तावत् रहस्यम् यै आचार्याः एकत्रैवासत्त्वाभावस्य विद्यमानता सर्वत्रमन्यन्ते । तन्मतानुसारेण उक्तदोष प्रसक्ति सम्भावनायाः समाप्त्यर्थं असत्त्वानधिकरणत्वमुक्तम् ।

यच्च अधिकरणताभेदेन भिन्नं भिन्नं स्वीक्रियते, सर्वत्र नास्त्येकः । शुक्तिरजतत्वादि दृष्टान्त ब्रह्मावृत्तित्वरूपस्य हेतोः तथा पारमार्थिकसत्त्वानधिकरणवृत्तित्वरूपस्य हेतोः तथा पारमार्थिकसत्त्वानधिकरणवृत्तिरूपस्य साध्यस्य व्याप्तिः निश्चिताः तद् व्याप्तिबलेनैव व्यावहारिक प्रपन्चमात्रवृत्ति असत्वानाधिकरणत्वरूपे धर्मे पारमार्थिकसत्त्वाधिकरणावृत्तित्वस्य सिद्धौ सत्यां प्रपन्चे अपारमार्थिकत्वं सिद्ध्यति इति ।

द्वितीयः विवादास्पदीभूतः (व्यावहारिक प्रपन्चः) मिथ्या वर्तते ब्रह्मभिन्नत्वात् यथा शुक्तिरूप्यम् । अत्र हि सद्भिन्नत्व रूपं मिथ्यात्वं विवक्षितं वर्तते । न तु सद्विलक्षणत्वरूपम् । अन्यथा असतिपदार्थे सद्भिन्नत्वरूपसाध्यस्य अवृत्तौ सत्यामपि ब्रह्मान्यत्वरूपस्य हेतोः वृत्तौ सत्यां साधारणानैकान्तिकतास्यात् । प्रपन्चरूपे पक्षे सद्भिन्नत्वरूपसाध्यस्य सिद्धौ द्वैतसम्मतं पारमार्थिकसत्त्वं समाप्तं भवति ।

तृतीयः परमार्थसत्त्वं स्वाधिकरणेविद्यमानस्यान्योन्याभावस्य प्रतियोग्यवृत्तिरस्ति यतः सद्भिन्नावृत्तित्वात् यथा ब्रह्मत्वम् । अत्र साध्यघटकीभूतं स्वपदं परमार्थसत्त्वस्यबोधम्, परमार्थसत्त्वस्य परमार्थसद्रूपाधिकरणे परमार्थसत् न एवं प्रकारेण अन्योन्याभावो न भवति । अपितु अपरमार्थ सत न एवं हि अन्योन्याभावोस्वीक्रियते । तस्य प्रतियोगिभूते अपारमार्थिकसति परमार्थसत्त्वस्य अवृत्तिरस्ति । अतः एतत् सिद्धं भवति, परमार्थसत्त्वं पर मार्थसतः भिन्न पदार्थे न भवति । अतः एक मेव ब्रह्मवस्तु पारमार्थिक सत्त्वं च मन्तव्यम् तद्भिन्नस्य व्यावहारिकप्रपन्चस्य अपारमार्थिकं अथवा मिथ्यात्वं अभ्युपगन्तव्यम् । माध्वमते

सर्वं जड़चेतनादिकं जगत् ।जगदें न हि पारमार्थिकं सत् भवति ।अत: परमार्थ सत्त्वस्याधिकरणीभूतघटे पट रूप परमार्थसत्त्वस्य अन्योन्याभाव: सुलभ: । तत्प्रतियोगिभूते परे वृत्तित्वैव न चावृत्तिता अत: अत: परमार्थ सत्त्वव्याप्य धर्मावच्छिन्न प्रतियोगिक: अयमन्योन्याभावस्य विशेषणं देयं भविष्यति । घटे पटो न एवं प्रकारेण पटत्वरूप व्याप्यधर्मावच्छिन्नप्रतियोगिक अन्योन्याभाव: सुतरांमिलत्येव । परमार्थ सत् न एवं प्रकारेण अन्योन्याभावो न मिलति । अत: हठात् तत्र अपरमार्थ सत् न तदृश: अन्योन्याभाव: स्वीकरणीय:,तत्प्रतियोगिभूते असत् पदार्थे परमार्थसत्त्वं न तिष्ठति ,अत: कथमपि बाधादि दोषाणां प्राप्तिर्नास्ति । एवं प्रकारेण मिथ्यात्वविशेषानुमाने प्रपञ्चस्य मिथ्यात्वं साधयितुं शक्यते ।इति वदन्ति अद्वैतिन: तन्न युक्ति सहम्।

मिथ्यात्व विशेषानुमानस्यनिराकरणम् :---

यत:पूर्वमेव ब्रह्मान्यत् वेदैकगम्यं धर्मादि परमार्थसत् श्रुतितात्पर्यविषयत्वात्,ब्रह्मवत् । साक्षिवेद्यं परमार्थसत् अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रतिपादात् विषयत्वात् आत्मवत् । विमतं परमार्थसत् स्वविषयकसाक्षात्कारात् पूर्वभावित्वात् आत्मवत् । नचास्मिन्ननुमाने असिद्धिदूषणं भवितुमर्हति ।यत: अद्वैतिवादिनां मतेऽपि प्रतिकर्मव्यवस्थार्थं स्वविषय साक्षात्कारात् पूर्वं घटादेर्भावात् इत्यादिप्रपञ्च सत्यत्वसाधनानुमाने हि मिथ्यात्वविशेषानुमानाभानिराकृतत्वात् ।अथ च सन् घट: इत्यादि प्रत्यक्षमपि प्रपञ्च मिथ्यात्वानुमानस्य बाधकं वेदितव्यम् ।

अपि च प्रपन्च मिथ्यात्वसाधकानां दृश्यत्वादि हेतूनां शब्दप्रमाणेनापि बाधो भवति यथाहि "विश्वं सत्यं" (ऋ०२।७।३) "यच्चिकेत सत्यमित् तन्न मोघम्" (ऋ०८।१।१७) "याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः" (ईशा०८) इत्यादि श्रुतिभिः "असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्" (गी०१६।८) इत्यादि स्मृतिभिः तथा च "नाभावउपलब्धेः" (ब्र०सू० २।२।२८) "वैधर्म्याच्च न स्वप्नादिवत्" (ब्र०सू० २।२।२९) इत्यादि सूत्रैश्च जगतः सत्यता प्रतिपाद्यते। यद्यपि विश्वं सत्यमित्यस्मिन् वाक्ये प्रत्यक्षप्रमाणवाक्येषु प्रत्यक्षप्रमाणसिद्ध जगत्सत्यत्वानुवादकतायाः अनुवादकत्वस्य संभवो नास्ति। यतः अस्मिन् वाक्ये परमेश्वरप्रणीतपरमार्थभूतस्य जगतः रचना प्रतिपाद्यते, यच्च वेदं विहाय केनापि प्रमाणान्तरेण न अधिगतम् येन अनुवादकतायाः शंका स्यात्। अतः यच्चिकेत अनेन वाक्येन ईश्वरस्य सत्योपादानगोचरापरोक्ष बोधस्य एवं याथातथ्यतोऽव्यदधात् अनेन वाक्येनपारमार्थिकस्य जगतः सर्जनं प्रतिपाद्यते। अतः एभिर्वाक्यैः मिथ्यात्वसाधकस्य अवश्यंबाधो भवति। अपि च "असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्" इत्यादि स्मृतिवाक्ये यदेतदुक्तं यत् ये नास्तिकाः जगतः सत्ताशून्यं ईश्वर विरचितत्वञ्च नहि मन्यन्ते ते अत्यन्तं भ्रान्ताःमिथ्यावादिनश्च। एवं नाभावोपलब्धेः तथा च "वैधर्म्याच्च न स्वप्नादिवत् इत्यादि वेदव्यास प्रणीत सूत्रेषु महर्षिबादरायणः शून्यवादस्य एवं क्षणिकविज्ञान-

---

१- ऋ० २।७।३ ।।

२- ऋ० ८।१।१७ ।।

३- ईशा० - ८ ।।

४- गीता १६।८ ।।

५- ब्र०सू० २।२।२८-२९ ।।

वादस्य च निराकरणं कृतम् । तथा च यत् इदं प्रत्यक्षादि प्रमाण सिद्धं सर्वानुभवसिद्धञ्च जगत् दृश्यते तत् शून्यं अथवा स्वप्नवत् काल्पनिकं एवं मिथ्याभूतं न भवितुमर्हति । इति ।।

दृश्यत्वहेतुविचार: :----

प्रपञ्च मिथ्यात्वप्रतिपादितानुमाने यत् हेतुत्वेविवक्षितं दृश्यत्वं तदपि नोपपादयितुं शक्यमद्वैतिभि: ।तथाहि किमिदं दृश्यत्वं वृत्तिव्याप्यत्वं वा? फलव्याप्तत्वं वा,साधारणं वा ? कदाचित कांचित्विद्विषयत्वं वा ?व्यवहारे स्वातिरिक्त संविदन्तराधीनानियतिर्वा ? अस्वप्रकाशत्वं वा ? तत्र वृत्तिव्याप्यत्वं दृश्यत्वम् । अयम् नाद्य: पक्ष: समीचीन: यत: तत्वमस्यादि वेदान्तवाक्यजनितान्त: करणपरिणामरूप अखण्डाकारवृत्ति व्याप्तता अथवा वृत्ति विषयता ,परमार्थसद्भूते आत्मन्यपि वर्तते । किन्तु तत्र मिथ्यात्वरूपं साध्यं नास्ति । अत: साध्याभावद्वृत्तिरूप: साधारणानैकान्तिको व्यभिचार क रूपो दोष: आपतिष्यति ।अत: दृश्यत्वं तावद्धेतु: दुष्ट एव ।अतएव एवमेव तृतीयोऽपि पक्ष:"वृत्तिव्याप्तत्वफलव्याप्यत्वयो साधारणम्" दूषित: भवति यत: उभयसाधारणसिद्धिपदेन वृत्तिव्याप्यताया:ग्रहणं भवति । तथा च व्यभिचार रूप: दोष: पूर्वमेव उक्त: । एवञ्च फलव्याप्यत्वं दृश्यत्वम् एव द्वितीयोऽपि विकल्प: असङ्गत: एव ।यत: धर्म धर्मादिषु नियमत: अतिन्द्रियपदार्थेषु इन्द्रियसन्निकर्षो नास्ति ।अतो हेतो विषयाधिष्ठानस्य आवरणभङ्गो न जायते । अनावृतविषयाधिष्ठानरूपस्य फलस्य व्याप्यता नास्ति । अत: तत्र धर्माधर्मादि अतिन्द्रियपदार्थेषु भागासिद्धि रूप: दोष: भविष्यति ।पक्षैकदेशेवृत्यभाव:भागासिद्धि: । यतोहि धर्माधर्मादिपदार्थोऽपिपक्षस्य एकदेशोऽस्ति न च तत्रफल व्याप्यत्वरूपो हेतु: एवं क्रौञ्च शुक्तिरूप्यदृष्टान्तेऽपि इन्द्रियसन्नि-

कर्षाभावत् विषयाकार वृत्तिप्रतिबिम्बित चैतन्यस्य फलस्य विषयतानास्ति। अतः दृष्टान्ते साधनवैकल्यंभाव्यात् । इन्द्रियार्थ सन्निकर्षजन्य अन्तः करण-वृत्त्यवच्छिन्नं चैतन्यं फलभवति । विषयत्वं फलव्याप्यत्वं तथा च अतिन्द्रिय-पदार्थेषु धर्माधर्मादिषु परमाणुषु च फलव्याप्यतानङ्गीकारात् नायं युक्तः पक्षः ।

नापि चतुर्थः विकल्पः संगतः यतोहि कदाचित् कथंचित् चिद-विषयत्वं दृश्यत्वं यदि स्वीक्रियेत तदाऽपि दूषणमस्ति एव यतो हि यथा नित्यातीन्द्रियधर्माधर्मादिपदार्थेषु परोक्षज्ञानावच्छेदकत्वेनैव कांचित् सादि-चैतन्यस्य विषयता अस्ति तथैव ब्रह्मण्यपि अज्ञातत्वेन,ज्ञातत्वेन वा चिद् विष-यतास्ति एव । किन्तु तत्र मिथ्यात्वमपि साध्यं नास्ति इत्येवम् । अतः असाधारणानैकान्तिकरूपो दोषः अस्ति एव । एवञ्च स्याद् व्यवहारे स्वातिरिक्त संविदपेक्षानियतिर्वा । अथ पञ्चमः विकल्पोऽपि न समीचीनः ।यतः अद्वितीयं ब्रह्मेत्यत्र इत्थं अद्वितीयस्वरूपविशेषण विशिष्टस्य ब्रह्मणः व्यवहारे विशेषण ज्ञानस्य नियमेनापेक्षा भवति ।अतः विशेषण ज्ञानं यावन्नजायते तावत् विशिष्टस्यापि वस्तुनः ज्ञानं जायते । विशिष्टबुद्धिं प्रति विशेषणज्ञान-स्य कारणत्वात् ।अतः नियमेन स्वभिन्नज्ञानसापेक्षव्यवहारस्य विषयता ब्रह्म-ण्यपि । किन्तु तत्र मिथ्यात्वरूपं साध्यं नास्ति । अतोऽपि दृश्यत्वं तावत हेतुः व्यभिचारी एवं अस्वप्रकाशत्वं दृश्यत्वं षष्ठोऽपि पक्षो न सम्भवितुमर्हति । यतः स्वप्रकाशत्वं तावत् अवेद्यत्वेसति अपरोक्षव्यवहारयोग्यत्व (चित्सुखी पृ०१६) अतः अस्वप्रकाशत्व रूपस्य दृश्यत्वस्य दृष्टान्ते साधनवैकल्यात् ।

अपि च दृश्यत्वस्य सन् मात्र वृत्तित्वात् विरुद्धता च स्यात्, यतो हि दृश्यते त्वग्रयाबुद्ध्या अनया श्रुत्या सत्यपि दृश्यत्वमस्त्येव। न च शुक्तिरजतं दृश्यमिति वाक्यम्, तत्र शुक्तिकायाअत्र दृश्यत्वात्।

किन्तु ज्ञाते धर्मिण्येव यस्य कस्यापिधर्मस्य विधानं वा निषेधो भवितुमर्हति, न तु अज्ञाते धर्मिणि। यदि हि शुद्ध ब्रह्म ज्ञानस्य वा वृत्तेर्वाविषयो नास्ति, तदा तत्र दृश्यत्वस्य मिथ्यात्वस्य वा निषेधः कथं कर्तुं शक्यते। अतः शुद्धे ब्रह्मणि वृत्तिविषयता अवश्यं मन्तव्या। अपि च स्वतः शुद्धे ब्रह्मणि तद् अद्रेश्यं इत्यनया श्रुत्या दृश्यत्वस्यनिषेधः क्रियते। एतादपि न वक्तुं शक्यते। यतः तस्यस्वप्रकाशत्वं तदैव सेत्स्यति यदा शुद्धे स्वप्रकाशे एतद्वव्दजनित वृत्तिविषयता भवेत्।

किन्तु शुद्धं न दृश्यं अनेन वाक्येन यस्यदृश्यपदार्थस्य भेदः शुद्धे ब्रह्मणि बोधितो भवति। तद् विशिष्टप्रपन्चरूप विशेषणेन विशिष्टं ब्रह्म एवं रूपः पदार्थः वक्तुं शक्यते। यतः विशिष्टज्ञाने विशेष्यस्यापि भानं भवति। अतः विशिष्टगतः दृश्यत्वधर्मः विशेषणेन सह विशेष्ये शुद्धे ब्रह्मण्यपि स्वीकरणीयो भवेत्, तत्र च मिथ्यात्वं अभिमतं नास्ति, अतः दृश्यत्व हेतोः व्यभिचारिता। (अत्र हि अद्वैतसिद्धेः श्रुत्या इत्यनेन पदेन श्रीविट्ठलेशः" य सर्व ज्ञः सर्ववित्" (मुण्ड १।१।६) अस्याः श्रुतेः ग्रहणं कृतवान्। न्यायामृतकारः श्रुत्या इतीदं पदं न स्वीकृत्य" शुद्धं दृश्यम" अस्मिन् वाक्यसंदर्भे एव इदं व्यभिचार दूषणं दत्तवान् अतः" दृश्यत्वैत्वादि ज्ञेयत्वादि श्रुत्या" इदं हि सिद्धि व्याख्या प्रकरणस्य विशेषरूपेण सामीप्यं प्रतीयते। यदि च एवं वक्तुं शक्यते यत् केवल् धर्माःएवं तद्घटके प्रत्येके वर्णे न भवन्ति। यथा" विष्णवे शिपिविष्टाय जुहोति" (तैसं०३।४।१।४) इत्यादि वाक्येषु शिपि-विष्टत्वरूप विशेषण विशिष्ट रूप शिपयोऽत्र रश्मयः तैराविष्टोभवति" निरुक्त ५।८) वैराविष्ये विष्णुदेवता

एव स्वीकरणीया भवति न तत्र शुद्धस्य विशेषणग्रहणम् ,अतः देवतात्वरूपधर्मं, विशिष्टे ~~किञ्च~~ वस्तुन्येव भवति । तथैव 'अग्निषोमाविदं हविरजुषेताम्' (तै ब्राह्म ३।५।१०) इत्यादि वाक्येषु अग्निसोमौ द्वावपि मिलित्वा देवता भवति न च प्रत्येकम् ,तथैव वृत्तिविषयत्वरूपदृश्यत्वमपि केवले विशिष्टे ब्रह्मण्येव भविष्यति नहि शुद्धे विशिष्टे ब्रह्मणि, अतः कथं व्यभिचार दोषः स्यात्? इति एवमपि न वक्तुं शक्यते । अतः दृश्यत्वं विशिष्टमात्रे एव भवति, तदा विशिष्यवत,केवलप्रपन्चरूपेविशेषणेऽपि न भविष्यति । पुनः दृश्यत्वरूपो हेतुः प्रपन्चस्य विशिष्टरूपभागे एव स्वीकरणीयो भवेत् ,न हि विशेषण भागे अतः असिद्धि रूपं दूषणं स्यदिव ।

किन्च तत्त्वमस्यादिसदावाक्यजन्य अखण्डब्रह्माकार वृत्तिरपि यदि शुद्धं ब्रह्म विषयी न करोति तदा उपहितमेव ब्रह्म विषयी भविष्यति । तदा तद् वृत्तिसमये अन्येसर्वेऽपि उपाधयः समाप्ताः भवन्ति । केवलमखण्डाकारवृत्तिमेव ब्रह्मणः उपधायकत्वेन मन्तव्या तदा सैव अखण्डाकार वृत्तिः स्वसहितं ब्रह्मविषयीकुर्वती स्वामपि विषयी करिष्यति । स्वस्मिन् स्वविषय त्वे एवं इष्टापत्तिः अद्वैतिभिः न वक्तुं शक्यते । यतः शाब्द बोधस्य अयं महिमावर्तते वाक्यार्थबोधे वाक्यघटकीभूतपदैः अस्थापितानां पदार्थानामेव भानं जायते , न तु पदानुपस्थितानां पदार्थानाम् ।'तत्त्वमसि' इत्यादि महावाक्येषु किमपि एतादृशं पदं नास्ति,यदखण्डाकारज्ञानस्य वाचकं भवेत् । अतः तस्यामेव वृत्तौ तस्य भानं कथं संभवेत् , यदि तस्यापि सम्बन्धस्यमानं यथा जायते तथैव अखण्डाकार वृत्तावपि पदानपस्थितायां वृत्तेरपि भानं भवेदेव । तर्हि एवमेवमपिवचनोचितं,यत तदातद् वृत्त्या कार्यसहितस्याज्ञानस्य निवृत्तिः न भविष्यति । यतः सकार्यमज्ञानं विषयं न कुर्वाणावृत्तिरिव सकार्यस्याज्ञानस्य निवर्तिका । किन्तु इयं वृत्तिःस्वतः स्वां विषयीकरोति ,या च वृत्तिः अज्ञानस्य कार्यभूताएव। यदि

एवं विधावृत्ति रपि अज्ञानस्यनिवर्तिका स्यात् तदा "अध्यक्षः" अयं घटःइत्यादि वाक्यजन्य वृत्तिरपि अज्ञानस्यनिवर्तिका भवेत् ।

जड़त्व हेतुनिरासः :----

यथा दृश्यत्व हेतुः प्रपञ्च मिथ्यात्वसाधने असमर्थः ।एवमेव जड़त्वमपि हेतुः प्रपन्चस्य मिथ्यात्वं साधयितुं न क्षमते ।तथाहि किमिदं जड़त्वं अज्ञातृत्वं वा ? अज्ञानत्वं वा ? अनात्मत्वं वा? तत्र नायंप्रथमः कल्पः समीचीन यतः अद्वैतवादे ज्ञाता अहं पदार्थः जीवोऽपि पक्षभूतस्य प्रपन्चस्य । एकदेशःतत्र च अज्ञातृत्वाभावात् पक्षैकदेश हेतोरभावात् भागा सिद्धिः । एवं अद्वैतसिधान्ते शुद्धस्य ब्रह्मणः ज्ञातृत्वं न स्वीक्रीयते अतः तत्रापि मिथ्यात्वाभावस्य अधिकरण भूते शुद्धे ब्रह्मणि अज्ञातृत्वमस्ति।अतो हेतौ साधारणानैकान्तिकत्वादोषः ।नापि द्वितीयः पक्षः युक्ति संगतः,यतो वै वृत्तिविशिष्ट चैतन्यमेव ज्ञानं इति स्वीकुर्वन्ति , नहि केवलायां वृत्तौ नापि केवले चैतन्ये ज्ञानत्वं स्वीक्रीयते । अतः ज्ञानत्वाभावएव अज्ञानत्वमस्ति । एवं प्रकारेण वृत्तौ अज्ञानस्य रुपस्य हेतोः वर्तमानेऽपि पूर्ववद् भागासिद्धर्नास्ति । किन्तु शब्दे चेतने साधारणानैकान्तिकता रुपं दूषणं यथावत् अस्तिएव । नापि अनात्मत्वं इति तृतीयोऽपि पक्षःसमीचीनः यतः यावत् कालपर्यन्तं आत्मत्वस्यनिरुपणं न कर्तुं शक्यते ।तदा अनात्मत्वस्य निरुपणं कथं स्यात् ? आत्मत्वस्यापि निरुपणं यदि क्रियेत तदा आत्मत्वं किं जातिविशेषः ? अथवा आनन्दरुपत्व वा ? अद्वैतवादे आत्मनःएकत्वमेव स्वीकृतम् , न तु नानात्वम् ।यतः एकस्यां व्यक्तौ विद्यमानस्य धर्मस्य जातित्वं न स्वीक्रीयते ।यतः एकमात्रनिष्ठा तु न जातिः ।तथाचोक्तं उदयानाचार्यैः-

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥

(किर०पृ०३३)॥

अत्र हि षण्णां जातिबाधकानां संग्रहः एव प्रकारेण कृतः, व्यक्तेरभेद इति ।

१-व्यक्तेरभेदः :----

एकव्यक्ति मात्र वृत्तित्वं तु न जातिः स्वीक्रीयते । यथा अस्य धर्मस्य आश्रयः एकैव व्यक्तिः स जातिर्न भवति । अतः जातिर्नाम सामान्यधर्मस्य सामान्यस्य हि अयमर्थः समानानां भावः इति, बहूनां समानपदार्थानां एकधर्मः इति समानता तु अनेकपदार्थेष्वेव भवति । नहि एकस्यां व्यक्तौ आकाशव्यक्तिस्तु एकैव अतः तत्र विद्यमानस्यकाशत्वरूपधर्मस्य जातिर्नोच्यते । यतः आकाशत्वे एकव्यक्तिवृत्तित्वरूपोधर्मः जाति त्वस्य बाधकः ।

२-तुल्यत्वम् :----

तुल्यत्वं(जाति समनीयतात्वं) यः धर्मः कस्यापि जातेः तुल्यो भवति स जातिर्न भवति । यथा घटत्वजातेः, तुल्यस्य कम्बुग्रीवादिमत्वरूपधर्मस्य जातिः न स्वीक्रियते ।यतः घटत्वं कलशत्वं नहिभिन्न धर्मः अपितु अभिन्न धर्मः । अतः तत्र तुल्यत्वस्य शंकैवमास्ति ।

---

१- किर० पृ०-३३ ॥

३-शंकर: :---

शंकरो हि व्यभिचारिधर्माणां एकसमावेश: इति,भिन्न,भिन्न अधिकरणे विद्यमानस्य धर्मस्य ,यदि कुत्र एकस्मिन्नधिकरणे विद्यमानता भवेत् तदा स जाति शब्देन नोच्यते । यथा मूतत्वमूर्तत्वे परस्परविरुद्धधर्मौ विद्येते, आकाशे मूतत्वं तिष्ठति न मूर्तत्वं,मूतत्वं हि वहिरिन्द्रियग्राह्यविशेषगुणवत्वम्, एवं मनस्यापि मूर्तत्वं वर्तते न मूतत्वम् ,मूतत्वं नाम अपकृष्ट परिमाणवत्वम् अनयोर्द्वयोर्धर्मयो: शाक्र्यं अर्थात् सामानधिकरण्यम् पृथिवी,अप,तेज,वायुषु एषु-चतुर्षु अस्ति । अत: मूतत्वं मूर्तत्वं इमौ द्वावपि धर्मौ जाति शब्देन न व्यपदिश्यते । केषांचित आचार्याणामते शांकर्य केवले एकस्मिन्नेव जातित्वस्य बाधक: भवति । न द्वयो: ।

४-अनवस्थिति: :----

जातौ जाति स्वीकरणेन अनवस्था रुपो दोष: जायते ।अत: जातौ जाति न स्वीक्रीयते ।

५-रुपहानि: :---

रुपहानि: अर्थात् स्वरुपहानिरुपजाति बाधको न भवति । केषान्चित् विदुषामिदंतावन्मतं यत् वैशेषिकाभिमतस्य विशेषपदार्थस्य लक्षणमास्ते । नि:सामान्यत्वे सति, सामान्यभिन्नत्वेसति समवेतत्त्वम् । एवं सति यदि विशेषेऽपि विशेष्यत्व स्वीक्रीयेत तदा उक्त लक्षणस्य हानि स्यात्।

यत: विशेषत्व सामान्यस्यविधमाने सति विशेषे नि:सामान्यत्वं न तिष्ठति। एवं परेषां विदुषां इदं मतमस्ति,यत् विशिष्यस्य तदेव जाति घटित लक्षणं अनिवार्यं नास्ति । जाति रहितमपि लक्षणं भवितुं शक्नोति,अत: रूपहानि इत्यस्य अयमर्थ: स्वरूपहानिरस्ति । विशेषस्य स्वरूपं विशिष्यत्वम् । विशेष-त्वस्य हि अयमर्थ: सजातीय परमाणूनां विशेषकत्वं अस्ति (व्यावर्तकत्वम्) तत्र जातौ स्वीक्रियमाणायां व्यावर्तकत्वं , परम्परया जातावेव पर्यवसितं भवि-ष्यति । तेन विशेषस्य व्यावर्तकत्वस्वरूपं भज्येत । अत: विशेषे विशेषत्वापि जाति: न स्वीक्रियते ।

६-असम्बन्ध: :-—

असम्बन्धोऽपि जातेर्बाधक:, असम्बन्ध: प्रतियोगितानुयोगिता-न्यतरसम्बन्धेन समवायस्य अभाव एव असम्बन्ध: ,जाति: तत्रैव तिष्ठति य: समवाय सम्बन्धेन कुत्रापि भवेत । अथवा तस्मिन्नपि कश्चित् समवाय सम्बन्धेन "तिष्ठति" यथा द्रव्यंगुणं कर्म इति । समवायपदार्थ: समवाय सम्बन्धेन न कुत्रा-पि तिष्ठति न च तस्मिन्,कश्चित् समवायसम्बन्धेन तिष्ठति । अत: समवायत्वं न जाति इति ।अस्यविषयस्य विस्ताररूपेण प्रतिपादनं अस्मिन् ग्रन्थान्तरे द्रष्टव्य: । एवं एषु बाधकेषु यत्र कोऽपि बाधको न भवति । तत्र जाति: किं निमित्तक: व्यवहार: ।यत्र च एषु कश्चिदपि बाधको भवति तत्र उपाधि-निमित्तक: व्यवहार इति ।

एवमुक्त प्रकारेण परिगणितेषु षट्षु जातिबाधकेषु एक-व्यक्तिवृत्तित्वमपि बाधकत्वेन स्वीकृतम् ।अत: आत्मत्व रूपधर्मजाति: न भवि-

तुमर्हति । यद्यपि जीवरूपाविशिष्टात्मान: अनेका:सन्ति तथापि ते सर्वे प्रपन्च-रूपपक्षे एव अन्तर्भूता: ।तत्र आत्मत्वजातौ स्वीकृतायां अनात्मत्वस्य हेतो: भागासिद्धि: स्यात् । एवं आनन्दरूपत्वमपि न आत्मत्वं यत: पक्षान्तर्गत विषयानन्दे आनन्दत्वमस्ति अत: अनानन्दत्वरूपस्य अनात्मत्वस्य हेतो: भाग-सिद्धि: । यदि विषयानन्दस्यापि आत्मत्वं स्वीक्रीयते तदा ज्ञान पक्षोक्त-दोष: प्रसज्येत । अर्थात् यथा केवलायां वृत्तौ केवले चैतन्येवा ज्ञानत्वं नास्ति, तथैव आनन्दत्वमपि न स्यात् । अत: यथा केवले चैतन्ये अज्ञानत्वरूपस्य हेतो: व्यभिचारिता तथैव आनन्दत्वरूपस्य अनात्मत्वस्य हेतो: व्यभिचारिता ।

यद्यपि विदेहमोक्षावस्थायां अर्थवितनक्षित प्रकाशस्य यथाकथंचित् उपादानं कृतं,तथापि तज्ज्ञानं न भवितुमर्हति, यत: मोक्षावस्थायां कश्चन ज्ञाता नास्ति एवं ज्ञातुरभावे ज्ञान कथं तिष्ठेत ? कर्ता विना क्रियाया: संभवो नास्ति, यथा भोक्तारं विना भोजनक्रियाया असम्भव : । ज्ञाधातोरर्थे ज्ञानमपि एका क्रियाऽस्ति याहि नियमत: स्वकर्तारमपेक्षते ।न चेदं वक्तुमुक्तं यत् आत्मरूप ज्ञानमनादि न च तत् क्रियारूपं अत: तस्य कस्यापि अपेक्षा नास्ति इति,यत: अनादि पदार्थोऽपि सर्वथा निरपेक्षा न भवन्ति, यत अनादि प्रागभावोऽपि स्वप्रतियोगिनमपेक्षते एव,जातिरपि स्वाश्रयीभूतो व्यक्तिमपक्षेत,जीवब्रह्म यो-भेदोऽपि स्वनियोजिनं स्वप्रतियोगिनं च अपेक्षते,अज्ञानमपि स्वाश्रयं स्व विषय-मपि अपेक्षते एव तथैव ब्रह्मसत्ताऽपि स्वकर्तारं नियमेनापेक्षते[1] । एवं लोके अक्षैर-नुभूयते ब्रह्मसत्ता[2] यदि सर्वथा निरपेक्षा चेत्,तदा अस्ति ब्रह्म

---

१- तै०उ० २।७।१ ।।

२- पा०सू० ३।५।६ ।।

इत्यादि प्रयोगेषु कर्तरि लट् लकारस्य प्रयोगो न स्यात् । यत: ल:कर्मणि चाभावे चाकर्मकेभ्य: (पा०सू० ३।४।६९) इत्यस्मिन् सूत्रे सर्वेषां लकाराणां विधानं कर्तरि स्यात् ,अत: ते लकारा: कर्तृवाचका: । एव अतीत ज्ञानस्य ईश्वर ज्ञानस्य च सोत्पत्त्यर्थं कर्तुं अपेक्षायामसत्यामपि स्वानिरूपपदार्थं विषयस्यापेक्षा भवत्येव,यत: ज्ञानस्य एषा स्वभावो भवति यत् ज्ञात्रा ज्ञेयेन च निरूपणम् । अन्यथा इदमहं जानामि एवं प्रकारेण इदमर्थस्य कर्मण: एव च अध्यर्थस्य (कर्तु:) अपेक्षां विनैव जानाहि: प्रयोग: संभव वेत । विवरणाकारेण इदं तावत् स्पष्टं उक्तं ज्ञातुरर्थप्रकाशस्य ज्ञानत्वम्" (पं०वि०पृ० २०३)।अत: यदि ज्ञानं सर्वथा निरपेक्षं स्यात् तदा विवरणवाक्यं विरुध्येत यत: विवरणाकार: तमेव प्रकाशं ज्ञानशब्देन व्यपदिशति, य: कस्यापि कर्तु: जन्मोभूत्वा कमपिपदार्थं विषयी करोति ।

अपि च यदा अपेक्षां ज्ञानम्" तदा विषय: अस्यां व्याप्तौ अस्वीक्रियमाणायां इदं रजतं अपरोक्ष बोधोपपादनाय अनिर्वचनीय रजतं न कल्पनीयमविष्यति, यत: भवतां आत्मरूपापरोक्षज्ञानवत् , विषयं विनापि इदं रजतं एव प्रकारेण अपरोक्ष बोधस्य उत्पत्तिर्भविष्यत्येव ।

किं च ज्ञानं तावत् द्विविधं प्रमारूपं भ्रमं रूपं च आत्मरूपं ज्ञानं यदि प्रकास्यात् ,तदा तद्विषयीभूतं अविद्यादिकं अबाधितं अथवा तात्त्विकं स्वीकरणीयं भवेत । न चात्मस्वरूपं ज्ञानं भ्रम: यत: आत्मरूपस्य ज्ञानस्यदोषजन्यत्वाभावात् फलत: आत्माज्ञान रूप: इति न वक्तुं शक्यते ।

अपि च प्रपन्चमिथ्यात्वसाधकस्य जडत्वरूपस्य हेतोः अज्ञानत्वं जाड्त्वं एवं विधः यः अर्थः क्रियते तदा ज्ञानत्वं किम् ज्ञानपदवाच्यभिन्नत्वं विवक्षितम् ? आहोस्वित् ज्ञानपदलक्ष्यभिन्नत्वम् ॥ प्रथमे कल्पे वृत्तिरूपो पाक्षो भागासिद्धि स्यात् । यत : वृत्तिविशिष्टं चैतन्यस्यैव ज्ञानपदवाच्यत्वं स्वीक्रीयते। अतः ज्ञानपदवाच्यत्वमेव वृत्तौ अस्ति , न तद्भिन्न त्वम्,वृत्तिरपि पक्षाभूतस्य प्रपन्चस्य एकदेशः ।एवंज्ञानपदलक्ष्यभिन्नत्व विवक्षायां घटादयोऽपि ज्ञानपदलक्ष्याः भवितुं शक्नुवन्ति । अतः घटादि जड़पदार्थेषु ज्ञानपदलक्ष्यभिन्नत्वरूप जड़त्वहेतोः असिद्धिः स्यात् । एवमचैतनत्वे जड़त्वं अयमपि पक्षो सर्वथा असमीचीन एव उक्ता पक्षावद्दिर्भावात् ।

परिच्छिन्नत्व हेतुनिरासः :--

नापि परिच्छिन्नत्वं तावद्धेतुः प्रपन्च मिथ्यात्वस्य साधकम् । तच्च परिच्छिन्नत्वं त्रिविधं भवितु मर्हति (१) देशतः परिच्छिन्नत्वं (२) कालतः परिच्छिन्नत्वं(३) वस्तुतः परिच्छिन्नत्वन्च । अत्र हि परिच्छेदशब्दस्य हि अर्थः व्यावृत्तिः,अन्तः अथवा अभावः भवितुमर्हति । घटस्य कस्मिन्नपि देशे परिच्छेदः व्यावृत्तिः,अन्तो वा,अयमेव घटस्य देशतः परिच्छेदोऽस्ति ।एवं घटस्य कस्मिन्नपि काले अन्तः अतः स एव घटस्य कालतः परिच्छेदोऽस्ति । एवं घटवस्तु घटस्य स्वरूपमेव,नतु पटस्वरूपं,अयमेव तस्य वस्तुतः परिच्छेदः । एवमेव अन्यैरपि शब्दैः अत्यन्ताभावप्रतियोगित्वं देशतः परिच्छिन्नत्वं,ध्वंसाभावप्रतियोगित्वं कालतः परिच्छिन्नत्वं, तथा च अन्योन्याभावप्रतियोगित्वं वस्तुतः परिच्छिन्नत्वं व्यपदिश्यते । एवं विधपरिच्छिन्नत्वं ब्रह्मणि नास्ति । यतः

ब्रह्मसर्वस्मिन्नपि देशे विभुरूपमास्ति । सर्वेष्वपि कालेषु नित्यमस्ति । सर्वेष्वपि वस्तुषु ब्रह्मविश्वरूपेण अस्ति, अत: 'अनन्तं ब्रह्म'[१] इत्युच्यते,इति अद्वैतिनो वदन्ति । एवं तेषां मतं सर्वथा अयुक्तमेव , उक्त प्रकारेण त्रिविधमपि परिच्छिन्नत्वं दोषयुक्तमेव । यत: अत्यन्ताभावः किम् समवाय सम्बन्धेन ,संयोगसम्बन्धेन अथवा सम्बन्ध सामान्येन वा विवक्षित: । नाद्य: पक्ष: समीचीन: प्रतिभाति,यत: समवायसम्बन्धेन अत्यन्ताभावप्रतियोगित्वं ब्रह्मणि व्यभिचरितम्। आकाशादिवत् ब्रह्माऽपि कुत्रापि समवेतं न स्वीक्रियते। एवं संयोगसम्बन्धेन अत्यन्ताभावाप्रतियोगित्वं आकाशादौ असिद्धम ,यत: आकाशादिकं विभु सर्वमूर्तसंयोगित्वञ्चस्वीक्रीयते ।यदि च अमूर्तद्रव्यनिष्ठअत्यन्ताभावस्य प्रतियोगित्वस्य विवक्षायां यद्यपि आकाशादिषु भागासिद्धिर्नास्ति , यत: आकाशादि अमूर्तद्रव्याणां परस्परं संयोगोन भवति, अत: अमूर्तनिष्ठसंयोगेन अत्यन्ताभावस्य प्रतियोगिता आकाशादिषु वर्तते ।तथापि आकाशादिवत् एव आत्मनोऽपि अमूर्तद्रव्यै सह संयोगोन स्वीक्रीयते ,अत: संयोगेन अमूर्तनिष्ठात्यन्ताभावस्य प्रतियोगिता आत्मनि मिथ्यात्वेन सह व्यभिचरिता । सम्बन्धसामान्येनात्यन्ताभाव अथवा सर्वसम्बन्धित्वाभावस्य विवक्षायामपि सर्वसम्बन्धशून्ये असङ्गे ब्रह्मणि व्यभिचाराख्यं दूषणं जायते । एवम ज्ञानं सर्वस्यापि प्रपञ्चस्य उपादानं कारणमस्ति, अत: सर्वसम्बन्धी,अत: अज्ञानेसर्वसम्बन्धित्वाभावप्रतियोगित्वं भागासिद्धि: । एवं ध्वंस प्रतियोगित्वमपि आकाशादौ असिद्धम् ,यत: तार्किका: आकाशादिकंनित्यत्वेनाभ्युपगच्छन्ति । अन्योन्याभावप्रतियोगित्वं तु आत्मनि व्यभिचारि:यत: आत्मा जड़वस्तुन: भिन्न : एव वक्तव्य:,अन्यथा आत्मापि जड़ात्मक:एव स्यात् इति ।

---

१- तै०उ० २।१।१ ।।

अपि च घटः सन् पटः सन् इत्यपि चाक्षुष प्रत्यक्षे सद्रूपस्य ब्रह्मणः मानं न स्यात् ।तत्र प्रथमं कारणं इदं वर्तते यत् स्वरूपतः एव पदार्थस्य चाक्षुषं प्रत्यक्षं भवति । किन्तु ब्रह्म तु रूपरहितमस्ति । तथा च श्रुतिः 'अशब्दमस्पर्शमरूपम्' (मुक्तिको० २।७२) । तथा द्वितीयं कारणं इदमस्ति ब्रह्मसंसार पर्यन्तं अज्ञानेनावृतं मन्यते उक्तं च गीतायां 'अज्ञानेनावृतं ज्ञानमिति' । तृतीयं च कारणं ब्रह्म केवलं औपनिषदं वर्तते,केवलं वेदान्तवचमे , च ब्रह्म इत्युच्यते ।"तं तौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतेः प्रामाण्यात् । एवमिदं तावन्मन्तव्यम् घटः सन् इत्यस्या प्रतीतौ,घटे विद्यमानस्य सत्वधर्मस्य विषयता तथैव यथा घटोऽनित्यः इत्यस्यां प्रतीतौ घटगतमनित्यत्वम्,यद्येवमुच्येत -यद्यपि ब्रह्मस्वरूपतः चाक्षुष प्रत्यक्षस्य योग्यं नास्ति, तथापि घटादि वस्तुषु अ आरूढं सत् तथैव प्रत्यक्षं भवति,यथा आकाशे सर्वत्र भ्रम राहुः सदा प्रत्यक्ष विषयो न भवति,किन्तु चन्द्रग्रहण वेलायामेव चन्द्रावच्छेदेन राहोःस्यामतायाः स्पष्टं प्रत्यक्षं जायते । तन्नैव वक्तुं शक्यते,यतः अयोग्यपदार्थोऽपि यदि योग्येन सह योग्यो भवेत् ,तदा सवरुपतः श्रोत्रग्रहणायोग्यस्य आकाशस्य शब्द संयोगेन श्रावणप्रत्यक्षस्य विषयो भवेत् । अतः प्रत्यक्षायोग्यं ब्रह्म घटसम्बन्धेनापि कदापि चाक्षुष प्रत्यक्षयोग्यं न स्यात्,एवं राहोः यः दृष्टान्तः उपस्थापितः, सन संगतः ,यतः राहोः नील विग्रहः अयोग्यो नास्ति ।अपितु दूरत्वदोषात् अथवा गगनगत पार्थिव निलिमायां संभिव्याहृतत्तेन कारणेन प्रत्यक्षं न दृश्यते , चन्द्रावच्छेदेन पृथक् भूत्वा प्रकटीभवति ,एवं प्रत्यक्षायोग्यस्य वस्तुतः कथमपि

---

१- मुक्तिको० २।७२ ।।

२- अज्ञानेनावृतं ज्ञानमिति (गी०५।१५)।।

३- बृ०उ० ३।९।२६ ।।

प्रत्यक्षायोग्यं असम्भवमेव, अतः नीरूपं ब्रह्म चाक्षुष प्रत्यक्षं कदापि न भवितुमर्हति ।

अपि च देशतः परिच्छिन्नत्वं नाम क्वचिन्निष्ठाभावः प्रतियोगितिकस्यात् । एवं च सर्वस्याभावं प्रतिजानता किञ्चिदधिष्ठानमभ्युपेयम् ।अभावस्याधिष्ठानबोधाधीनबोधत्वात् । तथा च स्पष्टं व्याघातः ।अपि च सकलमपि ब्रह्मण्यध्यस्तम् ।अतस्तत्र नास्तीति निषेधा न्नाधिष्ठानाभ्युपगत्या व्याघात् इति चेन्न, यतः परिच्छिन्नतानाम बाध्यता इत्यर्थः स्यात् । एवं च सति हेतौ साध्याविशिष्टत्वैव दुष्टतापत्तिः । अर्थात् हेतौ मिथ्यात्वरूपे साध्ये च किमपि वैलक्षण्यं न भविष्यति, समानरूपत्वात् । एवं कालपरिच्छेदे चानित्यता साधिता त्रिकालसत्यता वाभिप्रेता भवेत् ।

अपि च देशतः परिच्छिन्नत्वं नाम क्वचिन्निष्ठाभावप्रतियोगितिकस्यात् । एवं च सर्वस्याभावं प्रतिजानता किञ्चिदधिष्ठानमभ्युपेयम्। अभावस्याधिष्ठानबोधाधीनबोधत्वात् । तथा च स्पष्टं व्याघातः ।अपि च सकलमपि ब्रह्मण्यध्यस्तम् । अतस्तत्र नास्तीति निषेधान्नाधिष्ठानाभ्युपगत्या व्याघात् इति चेन्न, यतः परिच्छिन्नतानाम बाध्यता इत्यर्थः स्यात् । एवं च सति हेतौ साध्याविशिष्टत्वैव दुष्टतापत्तिः । अर्थात् हेतौ मिथ्यात्वरूपे साध्ये च किमपि वैलक्षण्यं न भविष्यति, समानरूपत्वात् । एवं कालपरिच्छेदे चानित्यता साधिता त्रिकालसत्यता वाभिप्रेता भवेत् । तथा च सति कालस्य एतादृशपरिच्छेदायोगेन स एव दुरात्मा व्याघातः समागतः ।अपि च कथं हि आकाशादेः काल परिच्छेदाध्यवसायः यदि तावत् जड़त्वं हेतुत्वं इत्युच्येत तर्हि तस्यपूर्वमेवापाकृतत्वात्,

घटादौ कार्यताप्रयुक्तत्वाच्च परिच्छिन्नत्वस्य । एवं यज्जडं तत्कार्यमियं व्याप्तिः इत्युच्येत तदपि न वक्तुं शक्यते,यतः अविद्याया मेव व्यभिचारि दोषात् यतः अविद्यायां जडत्वमस्ति, किन्तु कार्यत्वं नास्ति,अतः तत्र कार्यत्वाभावात् व्यभिचारो स्पष्ट एव । एवमविद्यायाः कार्यत्वेऽनादित्वपरिभाषा परिलुप्येत । तत्कारणस्याभावात् । एवं पञ्चमप्रकारं भेदाभावदाणस्य जडत्व हेतोर्भेदो नित्य तया अभ्युपगते व्यभिचारः स्यात् । भेदास्य च कालपरिच्छिन्नत्वपुनरावृत्तिः प्रसङ्गः ।न हि सहस्रधाराऽपि दायं दोग्धुं क्षमः इत्युन्मत्तवादश्च स्यात् ।अतः मिथ्यात्वसाधकानुमाने परिच्छिन्नत्वहेतुरपि असमीचीन एव । उक्त प्रकारेण निराकृतत्वात् ।

अंशित्व हेतु विमर्शः :---

चित्सुखाचार्यैस्तु प्रपञ्चमिथ्यात्व साधनाय एवमनुमानं उपस्थापितं तथाहि अयं पटः एतत्तन्तुनिष्ठात्यन्ताभाव प्रतियोगी,अंशित्वाद,इतरांशिवद् इति अनुमाने तन्तुपदं उपादानकारणमात्रस्योपलक्षकं अतः मिथ्यात्वस्य व्यापकं लक्षणं इत्थं निष्पद्यते । स्वोपादानकारणेविद्यमानस्यात्यन्ताभावस्य स्वगतप्रतियोगित्वमेव मिथ्यात्वमभ्युपगच्छन्ति अद्वैतिनः,तत्रेदनाभिप्यते द्वैतिभिः वेदान्त शास्त्रे कार्यकारणयोरभेदः स्वीक्रियते ,अतः कार्यकारणे अस्ति अयं प्रयोगः न कर्तुं शक्यते ।फलतः कार्यं उपादान कारणं न भवति अत्यं भेदोऽपि न सम्भाव्यते,किन्तु कार्यं कारणे नास्ति एवं प्रकारेण अत्यन्ताभावः तथा च तस्यात्यन्ताभावस्य कार्ये प्रतियोगित्वं स्वतः सिद्धम् ,अतः पूर्वसिद्धस्य पदार्थस्य साधनं सिद्धसाधनता दूषणं आयाति ।अपितु यदिकार्यं कारणाश्रितं न भवति

तदा आकाशादिवत् अनाश्रितं अथवा उपादानकारणात् भिन्नं यत्र कुत्राप्यधिकरणे आश्रितं भविष्यति,अत: अद्वैत्यभिमतं मिथ्यात्वं न सिध्यति ।अत: अर्थान्तरतानामकं निग्रहस्थानमपि प्रसक्तं भविष्यति । एवं अत्रानुमाने अंशित्वादिति अयं हेतुत्वेन स्वीकृत: वर्तते ।तत्र चंद्रिकाकृद्भि: अंशित्वादित्यस्य लघुचन्द्रिका टीकायां कार्यत्वात् इत्ययमर्थ: कृत: वर्तते । एवं सति अविद्यायां भागासिद्धि दूषणं स्यात् । तत्राविद्याया: कार्यत्वाभावात् हेतो:भागासिद्धि प्रसङ्गात् अत: अंशित्वादित्ययमपि हेतु: न मिथ्यात्व साधक: ।

अपि च अंशित्वरुपो हेतु: तस्मिन् पटविशेषे व्यभिचारि,य: पक्षरुपटस्यउपादानकारणतन्तुभि: सह संयोग संबन्धेन संबद्ध:,यत: संयोगसंबन्धेनात्यन्ताभावस्यप्रतियोगित्वरुपं साध्यं तस्मिन् पटे न तिष्ठति अंशित्वं तु वर्तते । अत: अंशित्व रुपो हेतो साधारणानैकान्तिकता ।अपि च य: पट: येषु तन्तुषु दृश्यते तस्यैव पटस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसाधने प्रत्यक्ष बाध: तथाहि इह तन्तुषु पट: इत्यनेन प्रत्यक्षेण बाध: ।

अपि च चित्सुखाचार्य सम्मतमिथ्यात्व साधकानुमानं सत्प्रतिपक्ष दोषदुष्टम् । सत्प्रतिपक्षश्च -यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्ष:,तथाहि अयं पट: एतत् तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात् व्यतिरेकेण पटान्तरवदिति ।यदिदमाक्षिप्येत अस्मिन् सत्प्रतिपक्षानुमाने अप्रसिद्धविशेषणता नाम दूषणमस्ति,यत: केवल पक्ष: भूत: पर: एव एषु तन्तुषु विद्यमानात्यन्ताभावस्य अप्रतियोगीरस्ति,अत: पक्षादतिरिक्तस्थले कुत्रापि साध्यं प्रसिद्धं नास्ति । एवमपि न वक्तुं शक्यते । यत: (चित्सु, पृ०२१) पूर्वप्रदर्शित अवयत्ववत् सामान्यतोदृष्टानुमानेन उक्तं साध्यं साधयितुं शक्यते । एषु तन्तुषु विद्यमानस्यात्यन्ताभावस्यप्रतियोगित्वं यस्मिन् कस्मिन्नपि धर्मिणि विद्यमानस्यात्यन्ताभावस्यप्रतियोगिरस्ति,यत: संसर्गाभावस्य प्रतियोगित्वस्य व्याप्यमस्ति यथा प्रागभाव प्रतियोगित्वम् ।

यथैवमुच्येत अस्य सामान्यतोदृष्टानुमानस्य हेतोः आकाशात्यन्ताभावे व्यभिचारि अस्ति । यतः आकाशात्यन्ताभावे संसर्गाभावप्रतियोगित्वस्य व्याप्यता गृहीतत्वात्, किन्तु तत्र किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिता नास्ति, यतः आकाशात्यन्ताभावस्य केवलान्वयि भवति, तस्याभावस्य कुत्रापि न स्थाप्यते ,इति एतदपिकथनमयुक्तमेव , यतः प्रमेयत्वादि केवलान्वयि धर्मिणि आकाशात्यन्ताभावः अस्ति, किन्तु तत्र संसर्गाभाव प्रतियोगित्वंनास्ति, अतः आकाशात्यन्ताभावे संसर्गाभावप्रतियोगित्वस्य व्याप्यता न गृह्यते । अतः उक्तस्य प्रतिरोधानुमानस्य विद्यमाने अद्वैतसम्मतंमिथ्यात्वानुमानं प्रपन्चे मिथ्यात्वं न साधयितुं शक्यते अद्वैतवादिभिः ।

किन्च चित्सुखाचार्यीयानुमाने एतत्तन्त्वारब्धत्वमुपाधि रपि वर्तते । यतः पटान्तरे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमस्ति । तत्रैव च एतत्तन्त्वनारब्धत्वमपि तिष्ठति ,अतः उपाधेःसाध्य व्यापकता,पक्षभूते पटे अंशित्वं तावदस्ति,किन्तु तत्र एतत्तन्त्वनारब्धत्वरूपो उपाधिर्नास्ति,अतः उपाधेसाधनाव्यापकता इत्थं उपाधिदोषा दुष्टमिदं चित्सुखाचार्य सम्मतानुमानम् ।

:o:-------:o:

## तृतीयोऽध्याय:

### अनिर्वचनीयाऽविद्यालक्षणनिरास:

अद्वैतिनां मते सर्वमिदं नामरुपात्मकं आत्मनि अध्यस्तं यत: अध्यासमन्तरा ज्ञात: मानं न भवेत् अत: आत्मानात्मनो अध्यास: स्वीक्रीयते, अतएव भगवत्पूज्यपादै: शंकराचार्यै: अध्यासभाष्यमुक्तं युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तम: प्रकाशवद्विरुद्धस्वभावयोरितरेतर भावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्ति:, इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यास:, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्, तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्त: सत्यानृते मिथुनीकृत्य "अहमिदं ममेदम्" इति नैसर्गिकोऽयं लोकव्यवहार: ।आह कोऽयमध्यासो नामेति । उच्यते -स्मृतिरुप: परत्रपूर्वदृष्टावभास: ।तं केचित् अन्यत्रान्यधर्माध्यास इति वदन्ति ।केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति ।अन्ये तु-यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते -इति । सर्वथाऽपि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति ।तथा च लोकेऽनुभव: शुक्तिका हि रजतवदवभासते,एकश्चन्द्र: सद्वितीयवदिति ।कथं पुन: प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ? सर्वो हि पुरोवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि ?उच्यते - न तावदयमेकान्तेनाविषय: , अस्मत्प्रत्ययविषयत्वात् ,अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धे: । न चायमस्ति नियम: पुरोवस्थिते एव विषये विषयान्तरमध्यसितव्यमिति,अप्रत्यक्षेऽपि ह्याकाशे

बालास्तलमालिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासः, तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि सन संबध्यते, तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वप्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । एवं सर्वोऽपि शास्त्रीयो लौकिको वैदिकश्च व्यवहारः अध्यास पुरस्सरमेव भवति । अध्यासमन्तरेण प्रमाणानां प्रवृत्तिरपि न जायते , न चानध्यस्तभावेन देहेन कश्चिद् व्याप्रियते, अतः अविद्यावद्विषयाणि प्रत्यक्षादीनिप्रमाणानि शास्त्राणि च । एवन्चाध्यास विषये आस्तिवादिनां बहुविप्रतिपत्तिः तथाहि ——

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथाऽनिर्वचनीयख्यातिरित्तुख्यातिपन्चकम् ।।इति ।।

अध्यासस्ताषाद्विविधः संसर्गाध्यासः स्वरूपाध्यासश्च आत्मानात्मनोः परस्परंसंसर्गाध्यासः, तत्रैवात्मनि अनात्मा स्वरूपेणापि अध्यस्तः। अतः आत्मनः सत्यत्वं अनात्मनः मिथ्यात्वं सिध्यति ।अस्य अनर्हभूतस्याध्यासस्य उपादान् कारणं तुमाथैव माया अविद्या अज्ञानं च इत्येते पर्याय वाचका शब्दाःएवन्चाज्ञानं अथवा अविद्या च तत्वान्यत्वाभ्यां अनिर्वाच्या अस्याः अविद्यायाः कथमपि निर्वचनंकर्तुं पार्यते अतो अनिर्वाच्या इयं हि अविद्या न सती वाच्यत्वात् नाप्यसती प्रतीयमानत्वात् नापि सदसती परस्परविरोधात्, अतः

---

अनिर्वचनीया । अस्या: अविद्याया: प्रकारान्तरेण भेदो वर्तते तथाहि पन्चदश्यां मायास्वरूप निरूपणावसरे अविद्याया: मिथ्यात्वं प्रतिपादितम् --

तुच्छाऽनिर्वचनीयाश्च वास्तवी चेत्यसौ त्रिधा[1] ।
ज्ञेया माया त्रिभिर्बोधै: श्रौतयौक्तिकलौकिकै: ।।इति।।

तथाहि श्रौतेन ज्ञानेन माया तुच्छाप्रतीयते युक्त्या मायाया: अनिर्वाच्यत्वमेवावगम्यते । लौकिकेन बोधेन मायावास्तवी प्रतीयते इति, माया तु अघटितघटनापटीयसी ---

कूटस्थ अनुपद्रुत्य करोति जगदादिकम् ।
दुर्घटैक विधायिन्यां मायायां काचमत्कृति: ।।

एवं माया स्वतन्त्रापि भवति, अस्वतन्त्रमपि चैतन्याच्छादने समर्था:, अतो माया स्वतन्त्रा चैतन्यमन्तरेण अस्याऽविद्याया: प्रतीतिर्न जायते अत: अस्वतन्त्रापि अपि च अविद्याया: शक्तिद्वियं वर्तते ।आवरणशक्ति: विक्षेपशक्तिश्च, आवरण शक्तिस्तु सर्वथा चैतन्यमावृणोति विक्षेप शक्तिस्तु जगदादि कार्यं करोति । उक्तश्च विक्षेपशक्तिस्तु लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेदिति सर्वथाऽपि अस्या: अविद्याया: अनिर्वाच्यत्वमेवाक्षीयते । उक्तन्च--

---

१- पन्चपदी- पृ०सं० १४५ श्लोक सं० -१३० ।।

सन्नाप्यसन्नाप्युभयात्मिकानो
भिन्नाप्यभिन्नाप्युभयात्मिको ।
साङ्गाप्यनङ्गाप्युभयात्मिकानो
महद्भुताऽनिर्वचनीयरुपा ।।इति ।।

इयं हि अविद्या कारणशरीरमपि भवति,इति अद्वयवादिनां राधान्त: । तदेतन्मतं अनिवर्चनीयविखण्डन नियकरोति मध्वाचार्य: ननुभो: केऽयमविद्या ऽनिर्वचनीया नाम यत: ज्ञानाभावव्यतिरेकेणाऽविद्यानापि प्रसिद्धा: नाप्युपपन्ना वा तत्प्रागभावे ज्ञानप्रध्वंसे एव अविद्या इति व्यवहार: लोके दृश्यते,अविद्या इत्यत्र विद्यापदेन समस्यमानस्य न ञ : विद्याभाव: अथवा विद्याविरोधिनी विद्यान्योवा अर्थ: स्वीकरणीयो भविष्यति ।अत: समस्यमानस्य नञ: षडर्था: भवन्तितथाहि —

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्था: षट् प्रकीर्तिता: ।।

क्रमेण अस्य उदाहरणानि सादृश्ये-अब्राह्मण:,अभावस्य-अपापं ,तदन्यत्वं-अनश्व:इति तदल्पत्वं अनुदरा कन्या,अप्राशस्त्यंअपशवो अन्ये गोभ्य:,विरोध: अधर्म:इति एवं क्रमेण नञर्थाः भवन्ति । एवं हि प्रथम पक्ष स्वीकारे विद्याभावे तथैव अनिर्वचनीयता नोपपादयितुं शक्या यथा वैद्याभावे घटादो यत: भावाभावाभ्यां लक्षणमनिर्वचनीयं भवति । विद्याभावस्तु घटाभाववत् अभावएव ,अत: विद्याभावो नानिर्वचनीय: ।नापि विद्याविरोधी अयं द्वितीय:पक्ष: समीचीन: अस्मिन् पक्षे विद्याविरोधिन: संशय: विपर्यय: अथवा

आत्मविशेषगुणा: सन्ति। तेष्वपिनानिर्वचनीयता उपपद्यते,यत: तत्र तेषु अनिर्वचनीयता अभ्युपगम्यमानतायां प्रसिद्ध भावरूपतायाः विरोध: स्यात् । एवं नापि विद्यान्य: अयं तृतीय: पक्ष:समीचीन:,यत: अस्मिन् पक्षे अपि विद्यान्यसमस्त ब्रह्मादिपदार्थेषु अविद्यात्वप्रसक्ति: स्यात् ।

एवं प्रकारेण अनिर्वचनीयाऽविद्यायां न किमपि लक्षणं नापि तत्र प्रमाणं पश्याय: ।यदि ज्ञाननिवर्त्यत्वं इदं तावल्लक्षणं क्रियते तर्हि उत्तर ज्ञाननिवर्त्यपूर्वज्ञाने अज्ञानत्वापत्ति: ।यदि च तद्दोषनिवारणार्थं अनादित्वविशेषणमुपादद्यै तद पि ज्ञानप्रागभावेऽतिव्याप्ति: भविष्यति ,यत: स अनादि रपि वर्तते ज्ञानरूपकार्येण निवर्त्योऽपि ।यदि च भावत्वं विशेषणदीयते तदा, अनादिभावरूपं वस्तु आत्मवत् नित्यं स्यात् , तत्र ज्ञाननिवर्त्यत्वं न स्थास्यति। यदि च चिरन्तनमतानुसारेण अनादिभावात्मक परमाणुगत श्यामत्वदेखिनिवत्यर्थं स्वीक्रियते,तदा ईश्वरज्ञाननिवर्त्य तत्रैवपरमाणुगत श्यामत्वादि अविद्यालक्षणस्यातिव्याप्ति: स्यात् । यत: भवदुक्त लक्षणं तत्र तिष्ठत्येव किन्तु नहि तद्ज्ञानं वर्तते,यदि अनाद्यनिर्वचनीयत्वं लक्षणं क्रियेत तदा किं तावदनिर्वचनीयत्वं निर्वचनविषयताभावत्वं ? अथवा भावाभावविलक्षणत्वं वा ? एवं पक्षद्वयमपि असम्भवम् । न च विभ्रमोपादानत्वं अविद्याया: लक्षणं युक्तम् , यत: विभ्रमोपादानंतु आत्मापि भवति,अतस्तत्रैवातिव्याप्ति: । यदेवमुच्येत, आत्माविभ्रमोपादानं नास्ति अन्यथा सत्योपादानकत्वात् विभ्रमोऽपि यथार्थो भविष्यति । एतदपि न वक्तुंशक्यते विभ्रमोऽपि स्वरूपत: सत्य एव । तत्र मिथ्यात्वव्यवहारस्तु विषयबाध्यतया जायते । किन्तु विभ्रमस्यस्वरूपं तु अबाधितमेव,यदि विभ्रमस्वरूपमपि बाधितं स्वीकृतं भवेत् ,तदा"एतावन्तं काल इदं रजतमित्यभात्" इत्यनुभव विरोध: स्यात् ।एवमेवाविद्यायां न किमपि प्रमाणम्। अहमज्ञ? इत्यपरोक्षानुभवस्तु ज्ञानाभावविषयत्वेनाप्युपपत्ते: ।

ज्ञानाभावस्यानुमान कर्तुं शक्यते । तथाहि सुषुप्तिकालीन: आत्मा ज्ञानाभाववान् साम्रयमावात् । अत: न अनिर्वचनीयाज्ञाने अज्ञोऽहं इत्यपरोक्षानुभव: प्रमाणम् । एवं यत्तु केश्चिदनुमानं रचितं न तावदज्ञानं ज्ञानाभाव:,अभावमानागम्यत्वात् ,सम्प्रतिपन्नवत् । अभावग्रहणं तु तार्किकादिमते प्रत्यक्षप्रमाणेन, भाट्टमते तु अनुपलब्धिप्रमाणेन भवति । किन्तु नहि तेनप्रमाणेन अज्ञानं गृह्यते, अज्ञाने प्रमाणगम्यत्वं तु अनेनाप्यनुमानेन निश्चीयते । अज्ञानं च न मानगम्यं माननिवर्त्यत्वात् सम्प्रतिपन्नवत्,यथा शुक्तिरजतसंसर्गादि,तदसत् ,अज्ञानस्य मानागम्यत्वे तत्सिध्यर्थं अनुमान प्रयोगो असंगत: ।अपि च अज्ञानं मानगम्यं न भवति, एतन्मानविषयत्वेसति स्ववचनविरोध: स्यात्,यथैवमुच्येत यथा सात्मनि प्रमाणद्वारा अवेद्यत्वसाधने स्ववचनविरोधादि दूषणं न भवति तथैव अज्ञानेऽपि प्रमाणेन अप्रमाणिकत्वसाधने न प्रामाणिकत्व प्रसक्ति: । इति एतदपि कथं न युक्तम्,यत: आत्मनि वृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वाभावकथावेद्यत्वसाधने न कोऽपि विरोध: । किन्तु नाज्ञाने वृत्तिव्याप्यत्वमङ्गी क्रियते । अपि च प्रमाणनिवर्त्यप्रमाणागम्यत्वस्य नियमोऽपि नास्ति, यत: प्रत्यभिज्ञाप्रमाणनिवर्त्यप्रमाणागम्यत्वस्य नियमोऽपि नास्ति, यत: प्रत्यभिज्ञाप्रमाणनिवर्त्यहेतु संस्कारे नित्यपरोक्षतयासाक्षिसिद्धत्वाभावात् । अनुमानगम्यत्वं स्वीक्रियते । एतदेव उक्तं वादावलिग्रन्थे न च प्रमाणनिवर्त्यस्य प्रमाणगम्यत्वेन व्याप्ति: यत: प्रत्यभिज्ञा प्रमाणनिवर्त्यस्य तद्धेतु संस्कारस्यमानागम्यत्वादिति ।

एवञ्च त्वदुक्तमर्थं न जानामि इत्यादि व्यवहारो अत्यन्त सुषुप्ते: ज्ञायमाने वा असंभाव्यमानोऽतिरिक्तमेव ज्ञानाभावाद् ज्ञानं बोधयति ।यत: अवगतेऽर्थे अवगतत्वादेव न जानामि इत्यादि व्यवहारायोगात्, अनवगतेऽर्थे च अनवगतत्वादेव प्रश्नानुपपत्तिरिति युक्तम् । अयमभिप्राय: यथा कश्चन् शिष्य:

स्वगुरुं प्रार्थयते भो । गुरो: अस्य मन्त्रस्यार्थं यं भवद्भिरहं पाठित: स मया विस्मृत: पुन: ज्ञापयतु भवान् अत्र हि अयं विचारणीय: शिष्य: यं अर्थं गुरुं पृच्छति स शिष्येण ज्ञात: ? अज्ञातो वा? यदि च ज्ञात: तदा मया विस्मृत: , कथं वक्तुं शक्नोति ।यदि च अज्ञात: तदा तस्मिन् विषये तमर्थं ज्ञापयतु इत्येवं रूपं शब्दं न वक्तुं शक्नोति ,यत: कमप्यर्थं ज्ञात्वैव तत्र विषये शब्दप्रयोगो भवति । अत: एवं तावद्वक्तव्यं भविष्यति, शिष्यस्य तस्मिन्नर्थे ज्ञानमपिअस्ति अज्ञानमपि ।अत्र हि अज्ञानं यदि ज्ञानाभावरूपं,तदा तस्यैव अर्थ विषये ज्ञानं ज्ञानाभावरूपं एतद्वयं परस्परं विरुद्धं,एकत्र नभवितुमर्हति । यदा अज्ञानं भाव रूपं स्वीकृतं भवतु,तदा द्वयमपि एकत्र संभवि,यत: ज्ञानं तावद् ब्रह्मचैतन्यं य: उक्तार्थस्य सामान्यांशं विषयी करोति,यत: उक्त शब्द रचना संभवति । एव-मज्ञानं च विशेष विषयकं ,यस्मिन् विद्यमाने मया विस्मृत: इत्येवं रूपो प्रयोगो जायते,सामान्य विषयकं ब्रह्मचैतन्यं अस्याऽज्ञानस्य न विरोधि,अपितु साधकम् । अत: उक्त व्यवहारबलेन भावरूपाऽज्ञानं सिद्ध्यति । अत: त्वदुक्तमर्थं न जानामि इत्यादि व्यवहारो भावरूपाऽज्ञाने प्रमाणमिति । नैतदपि वक्तुं शक्यं यत: त्वदुक्तमर्थं प्रमाणतो जानामि इत्येवं परतयाऽपि व्यवहारोपपत्ते:। यत: प्रतिवादि वाक्यादवगतार्थस्यानुवादपूर्वकं प्रमाणसंभवेन सर्वैर्वादिभि: निराकरणाङ्गीकारात् । अपि च व्यवहारोऽपि सर्वानुवादेन किं वा सामान्यत: तत्र नाद्य पक्ष: समीचीन: यतःसर्वानुवादेन व्यवहारस्यैव अभावात् ।भावे वा त्वदुक्तं न प्रमाणतो जानामि इत्येवंपरतोपपत्ते: प्रतिवादि वाक्यादधिगतार्थस्य अनुवादपुरस्सरं प्रमाणभावेन निरसन दर्शनात् । यत: अधिगताबाधितार्थविषयक ज्ञानत्वमेव प्रमाणानां प्रमाणत्वमिति । न च त्वदुक्ते: प्रमाणज्ञानमेव मम नास्तीत्यस्य विशिष्टविषयक ज्ञानस्य प्रमाणत्वात्,तद्विशेषणतया अर्थस्यापि

प्रमाणेन अधिगमात् स्ववचन व्याघातःइति युक्तम् । एतत् प्रमाणज्ञानस्य प्रमाणाभावविषयत्वेऽपि तदर्थस्य अनेतद् विषयत्वात् ।अन्यथा प्रमो ममासीत् इत्यादि प्रमाणज्ञानस्यापि विशिष्ट धम विषयतया प्रमविषयस्यापि प्रमापिकत्वोपपत्तिः ।एवमपि किं वा सामान्यतो व्यवहारः पूर्वोक्त द्वितीयोऽपि पक्षः नाभ्युपगमं हिः यतः सामान्यानुवादेन विशेषव्यवहारोपपत्तेः। विशेषस्यापि अधिगमानधिगमयोर्नैवं व्यवहारःइति चेत् न अस्तिकश्चित् विशेषः इति सामान्यतोऽपि ज्ञातत्वात् ।

अपि भावरूपाऽविद्यास्वीकारेऽपि पूर्वमर्थो ज्ञातो न वाऽइत्यस्यामवस्थायां सर्वथापि त्वदुक्तमर्थं न जानामि इति प्रश्नानुपपत्तिरिति यदि अद्वैतवादिभिः एवमुच्येत यत् सर्वं वस्तुज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव इति प्रमाणज्ञानोदयात् प्राग् ज्ञातत्वविशेषितोऽर्थःसाक्षिसिद्धोऽनुवाद गोचरो भवति च प्रश्नार्हः इति,तन्न वक्तुं शक्यते । साक्षिसिद्धतयाऽपि सिद्धेऽर्थे व्यवहारायोगात् ।यद्यपि साक्षिणा ज्ञातेऽपि प्रमाणबुभुत्सया व्यवहारो भवति तथापि साक्षिसिद्धत्वे प्रमाणबुभुत्सायाः निष्फलत्वात् । तथा च त्वयापि सामान्य सिद्धो अर्थोविशेष ज्ञानाय अनूद्यते इति वक्तव्यम् ।

एवं सति द्वैतवादिनोऽपि सामान्यःसाक्षिसिद्धस्य विशेष प्रमाणबुभुत्सया व्यवहारं ब्रूमः इति । तस्मात् नाविद्यानिरूपणगोचरतामाचरतीति कुतस्तत्कार्यं कुतस्तरां अविद्यातत्कार्योरन्यतरत्वस्य साध्यता सिद्ध्यतीति एवं नहि भावरूपाज्ञाननिराकरणेन सिद्धान्त विरोधः परन्यायेनैव परनिराकरणात्।

## भावरूपाज्ञानेऽनुमानप्रमाणनिरासः :---

अथ अनादिभावरूपाज्ञान साधनाय चित्सुखाचार्योक्त मनुमान-प्रमाणं उपस्थापयन्ति अद्वैतिनः । तथाहि देवदत्तप्रमातत्स्थप्रमाभावातिरिक्तः अनादिध्वंसीमीमात्वादविगीत प्रमा यथा विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाऽभावातिरिक्तानादेर्निवर्तकं प्रमाणत्वाद्यज्ञदत्तादिगतप्रमाणज्ञानवदित्यनुमानम् । अत्रायं विवेकः ये तु प्रमाप्रागभावनिवृत्तिरेव न तु निवर्तिका इति मन्यन्ते तान् प्रति देवदत्तप्रमां तन्निष्ठप्रमाभावातिरिक्तानादि निवृत्ति-रिति प्रयोक्तव्यम् ।

एवं हि अत्र प्रयोगः देवदत्तप्रमाणज्ञानंएतन्निष्ठ प्रमाणाभाव-त्वानधिकरणानादि निवर्तकं प्रमाणत्वात्,यज्ञदत्तप्रमाणवदिति । अत्रानुमाने दृष्टान्तेसाध्यसमन्वयः यज्ञदत्तप्रमायां देवदत्तनिष्ठप्रमाप्रागभावातिरिक्त स्वीय-प्रागभावस्यानादिनिवर्तकत्वमिस्त प्रमात्वरूपहेतुरपि । एवं पक्षधर्मतावलात् पक्षेऽपि साध्यसमन्वयः देवदत्तीयप्रमाप्रागभावातिरिक्त अनादिः कोऽपि भावपदार्थो अभ्युपगन्तव्यः स चाज्ञानमेव ज्ञानेन स्वप्रागभावातिरिक्त स्वाज्ञानस्यैव निवर्तनात् । अनादिनिवर्तकमित्युक्ते प्रागभावमादाय अर्थान्तरता । अतो अभावातिरिक्तेऽपि विशेषणमेतावत्युक्तौ तु अप्रसिद्धविशेषणता अतो देवदत्तनिष्ठेत्युक्तं यज्ञदत्तनिष्ठप्रमाणे देवदत्तनिष्ठप्रमाभावातिरिक्तावादेतत्प्राग-भावस्य निवर्तकत्वं सुप्रसिद्धम् । पूर्वज्ञानसुखादिव्यावृत्त्यर्थं अनादिग्रहणम् ।पक्षे च एतन्निष्ठप्रमाणज्ञानाभावत्वावधिकरणत्वं एतन्निवर्त्यज्ञानादेरेतन्निष्ठ-त्वानधिकरणत्वेन न संभवति, यतः अन्यनिष्ठप्रागभावं प्रति अन्यनिष्ठस्यानि-वर्तकत्वात्,तस्मादेत न्निष्ठत्वेसति यत्प्रमाणाज्ञानाभावत्वानधिकरणमनादि ज्ञान निरर्त्यन्व तदभिनता ज्ञानमेवेति तत्सिद्धिः । नन्वभावनिवृत्तिरेव भावः, नहि भावगतिरेकेण ाभावनिवृत्तिर्नाम संभवतीति केषांचिन्मतम् । तथा च यज्ञदत्तप्रमाणस्य स्वप्रागभावनिवृत्तित्वात्, निवर्तकत्वम्‌प्रसिद्धम् कत्वलदाप-

साध्याभावात्साध्यविकलो दृष्टान्त इति तत्पतानुसारेण मूले हेतुद्वयपक्ष उत्थापित: । आदिमन्ननुमाने व्याप्यत्वासिद्धि दूषणं आयाति । सोपाधिको हेतुर्व्याप्यत्वासिद्ध: । उपाधीनां तु साध्यव्यापकत्वेसति साधनाव्यापकत्वमिति पूर्वमपि उक्तम् । एवं उक्तानुमाने उपाधि द्वयमपि वर्तते । तथा च देवदत्त समवेतत्त्वं देवदत्तान्यसमवेतत्वं वा उपाधि: । तथा च दृष्टान्ते देवदत्तनिष्ठप्रमाभावातिरिक्तानादेर्निवर्तिकत्वरुप साध्यस्य सद्भावात्, देवदत्तासमवेतत्वरुपोपाधेःसंभवात् साध्यस्य व्यापकता, पक्षे प्रमात्वरुपहेतोर्विद्यमानत्वेऽपि देवदत्तासमवेतत्व देवदत्तान्यसमवेतत्वस्य च उपाधेरविद्यमानत्वात् साधनाव्यापकत्वमिति ।

एवञ्च घटोऽयं घटोऽयं एतद्घटप्रागभावव्यतिरिक्तानादेर्निवर्तक:, घटत्वात् घटान्तरवत् इत्याभाससमानयोगक्षेमत्वाच्च । न युक्तं उक्तानुमानम्। एतेन विगीतोभ्रम: एतज्जनकाबाध्यातिरिक्तोपादानक:, विभ्रमत्वात् सम्प्रतिपन्नवत् । इदमप्यनुमानं निरस्तं वेदितव्यम् । यत: अनादित्वप्रमानिवर्त्यत्वयोरेकविरोधाच्च एवं सत्प्रतिपक्षता च उक्तानुमाने तथाहि देवदत्तप्रमा देवदत्तगत एवत्प्रागभावातिरिक्तानादेर्निवर्तिका न भवति, सम्प्रतिपन्नवदिति ।

अथ च विवरणाचार्योक्तमनुमानमेव भावरुपाज्ञाने भवतु तथा च विगत प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त स्वविषयावरण स्वनिवर्त्य स्वदेशगत वस्त्वन्तरपूर्वकं, अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्न प्रदीपप्रकाशवदिति ।

अत्र ज्ञानमात्रस्यपक्षत्वे अनुवादज्ञानस्यापि ग्रहणात्, तत्र हेत्वसिद्धि: अत: प्रमाणेति धारावाहिक व्यावृत्तये विमतमिति । प्रमाणञ्च वृत्तिरेव

गृह्यते,अन्यथा सुखादि प्रमायां बाधः स्यात्,तस्याः साक्षिचैतन्यस्यरूपत्वात्, अज्ञानादिनिवर्तकत्वात् । वस्तुपूर्वकमित्यत्रैवोक्तौ स्वाश्रयात्मना सिद्धसाधनता स्यात्,अतो वस्त्वन्तर पूर्वकमित्युक्तम् । स्वाश्रयातिरिक्तसामग्रीचक्षुरादिनिवृत्त्यर्थं स्वदेशगतेति । योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमात्, पूर्वज्ञानस्य निवृत्त्यर्थं स्वविषयावरणेति ।अदृष्टादि व्यावृत्त्यर्थं स्वनिवर्त्येति । प्रागभावव्यावृत्त्यर्थं प्रागभावव्यतिरिक्तेति ।

अभावस्यावारकत्वं नास्तीति मते तु साध्यद्वयं बोध्यम्, स्वप्रागभावव्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकम् । स्वविषयावरणस्वनिवर्त्यस्वदेशगतपूर्वकमित्यपरम् । एवन्चानुमानद्वयं बोध्यम् ।

हेतुकोटौ धारावाहिकज्ञानेषु व्यभिचारवारणाय अप्रकाशितेति । धारावाहिकप्रमासुमयवैकल्यं वारयितुं प्रथमेति । आतपवतिदेशे समुत्पन्नदीपप्रमायां व्यभिचारमन्धकारेति ।

नाप्यनेनानुमानेन अद्वैतसिद्धान्ताभिमताभावरूपाज्ञानसिद्धिःयतः जड़पदार्थे अज्ञानानभ्युपगमेन अन्तःकरणवृत्तिलक्षण प्रमापज्ञानानां तथाविधवस्तुपूर्वकत्वाभावेऽपि हेतोस्तत्र सद्भावात् अनैकान्तिकत्वात् ।अपि च स्वप्रागभावव्यतिरिक्तेति विशेषणमपि व्यर्थम् । स्वनिवर्त्यविशेषणेनैव तद्व्यवच्छेदात् । यतः नहि भावः स्वप्रागभाव निवर्तकः अपितु भावोत्पत्तिरेव तत्प्रागभावनिवर्तिका अपि च भागाभावयोः सहावस्थानविरोधात्,न हि लोके भावाभावयोः क्वचित् सहावस्थानं दृश्यते ।अतः स्वनिवर्त्यविशेषणेनैव स्वप्रागभावव्यावृत्त्यर्थं स्वप्रागभाव व्यतिरिक्तेति विशेषणम् ।

किन्च सत्यतथा विषयवस्तुपूर्वकत्वेसाध्यो विवदातरसिद्धसाधनता स्यात् । अनिर्वचनीयतथा विषयवस्तुपूर्वकत्वेसाध्ये साध्यविकलो दृष्टान्त: । अविशेषिततथा विषयवस्तुपूर्वकत्वेसाध्येऽप्रसिद्धविशेषणताच । एवं प्रामाणिकाप्रामाणिकयो: साधारणधर्मस्याऽपि अप्रामाणिकत्वात् ।अनिर्वनीयस्य केनापि प्रमाणेन अप्रमितत्त्वात् ।न हि शंका विषाणगोविषाणयोर्विषाणत्वसामान्यमस्ति । एवं प्रतिबन्धस्य पापस्यापि सिद्धतया सिद्धसाधनता च यत: ज्ञानप्रतिबन्धक दुरितस्यापि ज्ञाननिवर्त्यत्वात् ।

किन्च किमिदं प्रकाशत्वं नाम ज्ञापकत्वं वा ज्ञापकाध्यायकत्वं वा,ज्ञानत्वं वा यदि ज्ञापकत्वं प्रकाशकत्वं स्यात् तर्हि चक्षुरादौ व्यभिचार: दृष्टान्ते साधन वैकल्यम् । ज्ञाने ज्ञानकरणत्वाभावेन असिद्धेश्च । नाद्य:पक्ष: समीचीन: ।एवं नापि द्वितीय पक्ष: युक्त: असिद्ध: ।अज्जनादौ व्यभिचाराच्च। नापि तृतीय: साधन विकलत्वात् दृष्टान्तस्य इति ।

श्री भाष्यकारेण श्रीरामानुजाचार्येणापि विवरणोक्तमनुमानस्य खण्डनं सम्यक् कृतम् । तथाहि यदुक्तं अनुमानेनापि भावरुपमज्ञानं सिद्धमितितदयुक्तम् । अनुमानासंभवात् ,न नूक्तमनुमानम् ।सत्यमुक्तम् । दुरुक्त तु तत् अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वात् हेतो: तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम् ।साधने च तद्ज्ञानमज्ञानस्यादित्वं निवारयति । ततश्चाज्ञानकल्पना निष्फलास्यात् ।

दृष्टान्तश्च साधनविकल:,दीपप्रभाया अप्रकाशिप्रकाशकत्वाभावात्। सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम्,सत्यपि दीपे ज्ञानेनविनाविषयप्रकाशाभावात् ।

सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम्,सत्यपि दीपे ज्ञानेनविनाविषयप्रकाशाभावात् । इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव, न प्रकाशकत्वम् । प्रदीपप्रभायास्तु चक्षु-रिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव । प्र-काशकज्ञानोत्पत्तौ व्याप्रियमाण चक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्यप्रकाश-कत्वव्यवहारः । नास्माभिर्ज्ञानतुल्यप्रकाशत्वाभ्युपगमेन दीपप्रभानिर्दिशता, अपि तु ज्ञानस्यैव स्वविषयावरण निरसनरूपप्रकाशकत्वमङ्गीकृत्येति चेन्न-नहि विरोधिनिरसन मात्रप्रकाशकत्वम् ।अपि त्वर्थपरिच्छेदः ,व्यवहारयोग्यतापादन-मिति यावत् । तत्तु ज्ञानस्यैव । यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गी-करणीयम् । तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् हेतोरनैका-न्त्यमित्यत्नमनेन ।

प्रतिप्रयोगाश्च ---

विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम्,अज्ञानत्वात्,शुक्ति-काद्यज्ञानवत् । ज्ञात्राश्रयं हि तत् । विवादाध्यासितमज्ञानं ज्ञानमात्रब्रह्मावरणम्, अज्ञानत्वात् शुक्तिकाद्यज्ञानवत् । विषयावरणं हि तत् विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यम्,ज्ञानविषयानावरणत्वात्,यत् ज्ञाननिवर्त्यमज्ञानम्,तत् तत् ज्ञानविषयावरणम्,यथा शुक्तिकाद्यज्ञानम् ।

ब्रह्मनाज्ञानास्पदम् ,ज्ञातृत्वविरहात्,घटादिवत् । ब्रह्मनाज्ञानाव-रणम्,ज्ञानाविषयत्वात् । यत् अज्ञानावरणम्, तत् ज्ञानविषयभूतम्,यथा शुक्ति-कादि । ब्रह्म न ज्ञाननिवर्त्या ज्ञानम्,ज्ञानाविषयत्वात् । यत् ज्ञाननिवर्त्याज्ञानम्, तत् ज्ञानविषयभूतम् यथा शुक्तिकादि ।

विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात् भवदभिमताज्ञानसाधन प्रमाणज्ञानवत् । ज्ञानं न वस्तुनो विनाशकम्, शक्तिविशेषोपबृहणविरहे सति ज्ञानत्वात् । यत् वस्तुनो विनाशकम् तत् शक्तिविशेषोपबृंहितज्ञानमज्ञानं च दृष्टम् ,यथेश्वरयोगिप्रभृतिज्ञानम् , यथा च मुद्गरादि।

भावरूपमज्ञानं न ज्ञानविनाश्यम्-भावरूपत्वात् घटादिवदिति । यथोच्यते बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यते इति नैवम् नहि ज्ञानेन तेषां विनाशः क्षणिकत्वेन तेषां स्वयमेव विनाशात् ।कारण निवृत्त्या च पश्चादनुपपत्तेः । क्षणिकत्वं च तेषां ज्ञानवत् उत्पत्ति कारण संनिधान एवोपलब्धेः अन्यदाऽनुपलब्धेश्चावगम्यते । अक्षणिकत्वे च भयादीनाम् भयादिहेतु भूतज्ञानसन्ततौ अविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्ति हेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च । स्वप्रागभावव्यतिरिक्त वस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोग कुशलता चाविष्कृता ।

अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिः किन्तु ज्ञानाभावः एव सिद्ध्यति नायं नियमः यत् प्रत्यक्षे धर्मिण्येव यस्य कस्यापि साध्यस्य अनुमानं जायते यथा प्रातः समये चत्वरादि धर्मिणि सायं समये तत्र गजाभावस्यानुमानं कर्तुं शक्यते ।नहि अप्रत्यक्षे धर्मिणि इति तन्न समीचीनम् । यद्यपि सुषुप्ति समये तत्कालीनात्मनो न ज्ञानमस्ति,तथापि उत्तरकाले सम्भवत्येवानुमानेन तस्य ज्ञानम् ।तथाहि अनिद्राणस्य सम्प्रतिपन्नोदयास्तमयोरन्तरालकालानुभवात् निद्राकालात् पूर्वोत्तरास्तमयोदयकालयोर्मध्यकालत्वेन हेतुना अन्तरालकालवत्त्वमनुमाय तस्यापि आत्मवत्त्वं कालत्वेन इतरकालवत्त्वमनुमाय ,

तस्मिन्नधर्मिणि ज्ञानाभावानुमानं अप्रत्यूहं इत्यर्थः । उक्तन्च तात्पर्य परिशुद्धौ उदयनाचार्यैः अप्रकर्षप्रकरणे पूर्वापरावस्थयोः एकत्वप्रत्यभिज्ञानेन मध्यावस्थायामपि तत्सामान्येन उपनयादिति तथाहि -सुषुप्तिपूर्वोत्तरकालिके उदयास्तमयोरन्तरालकालविशिष्टौ उदयाः तमयत्वात् । अनुभूतान्तरालकालोदयातस्तमयवत् । तत्रापि काले कालत्वेन हेतुना आत्मनःअनुमानं भविष्यति । स कालः आत्मविशिष्टः कालत्वात् उपरकालवत् ,एवं तत्र अनुमित्यात्मनिज्ञानाभावस्य अनुमानं सिद्धत्येव । तथा च सुषुप्तिकालीनः आत्मा ज्ञानाभाववान् ज्ञानसामग्रीविरहरुपत्वात्,संप्रतिपन्नवत् । अन्यथा अद्वैतवादिभिरपि सुषुप्ति काले घटपटादिविशेषत्व ज्ञानाभावस्यानुमानं कथं कर्तुं शक्यते ।

## भावरुपाज्ञाने श्रुतिप्रमाणनिरासः

नापि नासदासीत् नोसदासीत् इत्युपक्रम्य तमः आसीत् मायां तु प्रकृतिं विद्यात् इन्द्रो मायाभिः इत्यागमः तत्र भावरुपाज्ञाने प्रमाणं भवितुमर्हति । कुतः पूर्वोक्त श्रुतिभिः तमः शब्देन सांसारिक पुरुषाणां प्रलयकालीन ज्ञानाभाव एव अभिधीयते ।मायाशब्देन च परमेश्वर स्वरुपभूतायाः ज्ञानशक्तिरेव अभिधीयते,न तु भावरुपाज्ञानम् एवम् ।

ननु भावरुपाज्ञाने तथ्या हिरण्यं निधि निहितम क्षेत्रज्ञा उपरि उपरिसन्चरन्तोन विन्देयुः एवमेव इमाः सर्वाः प्रजाः अहरहरगच्छन्त्य एवं ब्रह्मलोकं न विन्दन्ति अनृतेन प्रत्युढाः (छा०उप० ८।३।२) इयं हि श्रुतिः

---

१- छा०उप० १।३।२ ॥

छान्दोग्योपनिषदाज्याध्याये पठिता ब्रह्मज्ञानस्य प्रतिबन्धकीभूतस्यानृतत-त्त्वस्य प्रतिपादनं कुर्वती भावरूपाज्ञाने स्पष्ट प्रमाणम् 'अनृतेन प्रत्यूढा' अस्य वाक्यस्य अनृतपदेन प्रत्यूढ पदेन च यस्य घोरान्धकाररू आवरणरूपत-त्त्वस्य उपस्थितिर्भवति , सैषा विद्यावस्तु । तस्या अविद्याया: अयं प्रभाव: भूमौ निहितस्य सुवर्णकोषात्स्थ उपरि उपरि गच्छन्तो जना: अज्ञा: प्राणिन: तं सुवर्णं कोशं यथा न प्राप्नुवन्ति तथैव प्रतिदिनं सुषुप्ति वेलायां सर्वेऽपि जीवगणा: ब्रह्मणा सह एकीभूयापि स्वब्रह्मरूपतां न जानन्ति । एवं अनृततत्त्वं अविद्यां परित्यज्य नान्य:कोऽपि पदार्थ: भवितुमर्हति । अत: उक्त भावरूपा ज्ञाने उक्त श्रुति:[१] प्रमाणं भवितुमर्हतीति चेत्,न 'ऋतपिबन्तौ सुकृतस्य लोके' (कठोपनि० १।३।१) इत्यादि वाक्येषु तथा 'ऋतं सत्यं तथा धर्म:' इत्यादि श्रुति वाक्येषु ऋतशब्देन मिथ्या ज्ञानस्याभिधानं न क्रियते ,किन्तु सत्कर्म तथा पुण्यप्रतिपादनमेव क्रियते , अत: अनृत पदेन ऋतविरुद्धस्यपापकर्मण: एव प्रति-पादनं कर्तव्यम् । इत्थं नहि पूर्वोक्ता श्रुति: न भावरूपाज्ञाने प्रमाणम् ।यत: 'अनृतेन प्रत्यूढा' इत्यस्य 'पापकर्मणा प्रतिबद्धा:' इत्यर्थकरणस्यैवौचितत्वा-दिति । यदि च अद्वैतिभि: , इदमाकिाप्येत 'अनृतेन प्रत्यूढा' अस्या: श्रुतेरन-न्तरपठितेन 'य आत्मा अपहतपाप्मा' (छा०८।७।१) इत्यैच्छ्रुति वाक्येन आत्मनि पापकर्मण: अभाव: प्रतिपादित:,अत: सुषुप्तिकाले ब्रह्मरूपताया:अस्फुरणस्य कारणं पापाख्यं कर्म न भवति,अपितु अज्ञानावरणमेव । अत: 'अनृतेन प्रत्यूढा:' अस्य वाक्यस्य पापप्रतिबद्धा: नायमर्थ: कर्तव्य: अपितु अज्ञानावृता अयमेव अर्थ: स्वीकरणीय: । सुषुप्तिकाले समस्तस्यापि कर्मण: स्वरूपत: नाशेन पापा-ख्यस्यापि कर्मण: अभावो मन्तव्य: । एवं पापकर्मण: कारणरूपेणावस्थितत्वर्थं

---

१- प०वि०पृ० -१०७ ।।

कर्मण: अभावो मन्तव्य: ।एवं पापकर्मण: कारणरूपेणावस्थित्यर्थं कर्मण: कारणीभूतमज्ञानं परमावश्यकम् ।अपि च नहि कर्मणि आवरकत्वसम्भव:,यत: कर्मावरणं हि ब्रह्मस्वरूपभानस्यप्रतिबन्धकं भवेत् , विवरणाचार्यस्यापि अयमेव अभिप्राय: ।[1] "न च कर्मापि स्वाश्रयावभासविरोधीनीति प्रमाणमस्ति , संस्कारत्वाच्च कर्मणां भ्रान्ति संस्कारवदप्रतिबन्धकता,तस्मात्,सुषुप्तौ स्वरूपानवभासव्यवहारो ग्रहणमिथ्याज्ञानतत्संस्कारकर्मभ्योऽन्यदेव किन्चित्प्रतिबन्धकमज्ञानं कल्पयतीत्यर्थ:" इति, अत: ब्रह्मरूपतावभास प्रतिबन्धकता तत्रैवाज्ञाने वक्तव्या,यत ज्ञानेन साक्षात् निवर्त्यति । कर्म तु ज्ञानेन न साक्षात् निवर्तनीयम् ।अत: नहि कर्मापि आवरकत्वं घटते न वा प्रधानप्रकृतौ,यत: प्रधानतत्त्वमपि कर्मवत नहि ज्ञानेन साक्षात् निवर्त्यते । एवन्च अज्ञानस्य ज्ञाननिवर्त्यतायां[2] "भूयश्चान्ते विश्वमायानिवृत्ति:" इयं हि श्रुति:प्रमाणम् ,यत: मायाशब्दस्य अर्थ: अज्ञानम्,अज्ञानन्च असत्त्वापादक अभानापादकभेदेन द्विविधम्, एवं तत्समस्तप्रकाराणां सूचनं कृतम् "विश्वमायानिवृत्ति:" अर्थात् सर्वविधस्याप्यज्ञानस्य निवृत्तिर्भवति ज्ञानेन । इत्युक्त्याश्रुत्या सूच्यते इत्येवं मानरूपाज्ञानमवश्यमभ्युपगन्तव्यमद्वैतिवादिभि: इति चेत् भवन् अत्रोच्यते द्वैतवादिभि:नेदमद्वैतिनां मतं समीचीनम् ,यत् "विश्वमायानिवृत्ति:" इत्यनयाश्रुत्या उक्त प्रकारेण द्विविधस्याज्ञानस्य साधनं क्रियते । तत्सर्वथा असङ्गत: श्रुति विरुद्धन्च मत: "विश्वमायानिवृत्ति:" अस्यां श्रुतौ निवृत्तिशब्दस्यार्थ: सन्तरणम्,अर्थात् (पारगमनम्) , नाश:,यत: मायां एतां[3] तरन्ति ते" अस्मिन् वाक्ये मायाया:

---

१- प०वि०पृ०-१०७ ॥

२- श्वेता० १।१० ॥

३- गीतायाम ७।१४ ॥

सन्तरणमेव उक्तम्, न नाश: ।कस्यापि सन्तरणेन तथा:नाशो न भवति अत: उक्त श्रुतिवाक्येन मायायां ज्ञान निवर्त्यता विनाश्यतां वा नहि प्रतिपादयितुं शक्यते । तस्मान्नास्ति इयं हि श्रुति: भावरूपाज्ञाने प्रमाणम् ।

किन्च मत्पूर्वं अज्ञानं अनृतं अथवा मिथ्याभूतं एवं असत् च यदुक्तं[1] तं न संगतम् ,यत: "तम: आसीत्" अनया श्रुत्या अज्ञानस्य यस्या:सत्ताया प्रतिपादनं क्रियते , अज्ञानस्य सा सत्ता पारमार्थिकी,न तस्या: किमपि बाधकम् पलभ्यते,अत: पारमार्थिकी माया मिथ्या शब्देन नाभिधातुं योग्या ।

"नासदासीनो सदासीत्"[2] अनेन श्रुति वाक्येन मायायां पारमार्थिकत्वं तुच्छत्वं च निषेध्यते,अत: मायाया: व्यावहारिक सत्तायां श्रुतीनां तात्पर्यं निरर्णीयते अद्वैतिभि: तदपि नोपपद्यते,यत: उक्त श्रुतिवाक्यद्वारा मायाया: प्रतिपादनं क्रियते, न भावरूपाज्ञानस्य,यत: माया शब्दस्य न हि अज्ञानमर्थ: । मायाशब्दस्य यदि अज्ञानं अर्थ: स्वीकृतो भवेत् ,तदा "मायिनं तु महेश्वरं" एतच्छ्रुति वाक्येन प्रतिपादित: परमेश्वर:अज्ञानी भविष्यति यदि ईश्वर: अज्ञानी भवेत् , तदा "य: सर्वज्ञ: सर्ववित्" इत्यादि श्रुतिषु ईश्वरस्य सर्वज्ञत्वादिकाया: अभिधानं विरुद्धं भवेत्,अत: माया अज्ञानेन भिन्नेव स्वीकर्तव्या ।

---

१- ऋक् १०।११।१२९ ।।
२- ऋ० १०।११।१२९ ।।

अपि च माया शब्दस्य अज्ञानमर्थः न कदापि संभवः, यतः ज्ञानार्थकं मयगतौ[1] इत्यस्माद्धातोः अपि प्रत्यय ततश्चापि (मय + अण + अप्) कृते सति मायाशब्दस्य वाक्यार्थः ज्ञप्ति अथवा ज्ञानं तच्च अज्ञानस्य विरोधी। अतोऽपि न माया शब्दः अज्ञानार्थकः ।

किन्तु शुक्ति रजतादिमिथ्यापदार्थेषु मायाशब्दस्य अद्वैतवादादन्यत्र कुत्र प्रयोगो न दृश्यते, अतः मायामात्रमिदं द्वैतम्[2] मायामात्रमिदं सर्वम्, इत्यादि अद्वैतिनां यः व्यवहारः स सर्वथा असङ्गतः एव तस्यान्नास्तिमाकरणाज्ञाने श्रुतिप्रमाणम् ।

## अज्ञाने अर्थापत्ति प्रमाणनिरासः

जीवस्यानवच्छिन्नब्रह्मानन्दाप्रकाशान्यथानुपपत्तिश्च अज्ञाने प्रमाणम् इति वदन्ति अद्वैतिनः अर्थात् जीवे निरतिशयानन्दस्य अप्रकाशस्य अन्यथानुपपत्तिरपि अज्ञाने प्रमाणं भवितुमर्हति ।जीवः ब्रह्मभिन्नः अतस्तत्र निरतिशयानन्दस्य अनभिव्यक्तिः अन्यथाप्युपपद्यते न चेयं शंका कर्तुं युक्ता ।यतः जीवब्रह्मणोर्भेद निराशः द्वितीय परिच्छेदे करिष्यते ।अतः उक्तान्यथा नुपपत्तिः अज्ञाने प्रमाणं उपस्थापयन्ति यद द्वैतवादिनः तदसङ्गतम् । तथाहि जीवः यदि निरतिशयानन्दस्वरूप ब्रह्मणः अभिन्नः, तर्हि जीवस्य स्वप्रत्यक चैतन्यस्वरूपं

---

१- मां०का० १।१७ ।।

२- वृहदवा०पृ० ६३१ ।।

संसारावस्थायामपि प्रकाशितं तथैव अनवच्छिन्नानन्दारूपतायाः प्रकाशनमुचितम्,यतः निरवयवस्य वस्तुनः भानमभानं वा कदापि नोपपद्यते । एवं यच्चोक्तं भ्रमस्य सोपादानत्वान्यथानुपपत्तिरपि अविद्यायां प्रमाणं तदप्यसङ्गतम् । यतः शुक्तिरजताद्यध्यासस्य अंश द्वयं भवति,ज्ञानं विषयश्च तत्र ज्ञानस्य प्रसिद्धमुपादानं कारणं अन्तःकरणमस्ति,तदर्थं अविद्यायाः अपेक्षा नास्ति, एवं भ्रमविषयः असत्ख्यातिवादे अत्यन्तं असत् भवति,तदुपादानतयैव अविद्यायाः आवश्यकतैव नास्ति ।

अपि च ब्रह्मणि प्रपञ्चस्य विवर्तोपादानोत्पत्त्यर्थं यथा ब्रह्मणः भिन्नं प्रज्ञानरूपं तात्त्विक उपादानं कल्प्यते । तथैव ब्रह्मनिष्ठाऽविद्याश्रयतायाः उपपादनार्थं ब्रह्मणः भिन्नं किमपि तात्त्विकमधिकरणं कल्पनीयम् । किन्तु आश्रयान्तरकल्पनां विना ब्रह्मणि यथा अविद्यायाः मुख्याश्रयता स्वीक्रियते,तथैव अज्ञानरूपोपादानान्तरस्य कल्पनां विनैव ब्रह्मणि प्रपञ्च विभ्रमस्य मुख्योपादानत्वं मन्तव्यम् ।

किन्तु मध्वाचार्याणां मते शुक्तिरजतादिकं असत्यं भवति । तच्च स्वपरिणाम्युपादानं तन्नापेक्ष्यते,यतः परिणामोनाम सत्यरूपान्तरापत्तिः,यथा कटकादि सत्यरूपेण परिणतेन सुवर्णादिकं परिणाम्युपादानकारणं भवति, तच्च प्रकृतेः न संभवः अतः विभ्रमस्य तात्त्विकोपादानत्वं अन्यथोपपत्तिद्वारा अज्ञानस्य कल्पना न संभाव्या ।

किञ्च घटादीनामुपादानकारणता मृत्तिकायां प्रसिद्धं उपादानोपादेयस्य समसत्ता दृश्यते,घटाद्युपादेयापेक्षयामृदाद्युपादानस्य अधिक सत्ता न

स्वीक्रीयते । लोके प्रसिद्धमुपादानोपादेयभावस्य आधारेणैव प्रपञ्चस्योपादानं कल्पनीयम्, अत: आकाशाद्यपेक्षया अधिक सत्तावत: ब्रह्मरूपोपादानस्य कल्पना सर्वथा असङ्गता, यत: लोके चैतन्यतत्त्वं कस्याप्युपादेयस्य उपादानं न प्रसिद्धम् ।

किञ्च सांख्य सम्मतं एकं त्रिगुणात्मकप्रधानं तत्त्वं त्रिगुणात्मकप्रपञ्चस्योपादानं कारणमुचितम्, ब्रह्मणि मायायां च प्रपञ्चोपादानत्व कल्पनं सर्वथा गौरवग्रस्तम् । तस्मान्नास्ति भावरूपाज्ञाने अर्थापत्ति प्रमाणम्।

## जगत: सत्यत्वप्रतिपादनम्

मध्वाचार्याणां मते इदं सर्वं जगत पारमार्थिकरूपेण सत् यत: असद्वस्तुनि व्यवहारासम्भवात्, जगति च अर्थक्रियाकारित्वरूप व्यवहारदर्शनात्, प्रत्यक्षप्रमाणसिद्धत्वाच्च । कालाबाध्यत्व रूपं सत्यत्वं जगति सिद्धं भवति । उक्तं हि मध्वाचार्यै: ---

यादृश: ब्रह्मण: सत्त्वं तादृशं स्याद् जगत्यपि ।
तत्स्यादनिर्वाच्यं चेतिशापिस्तथास्तुन: ।।

एवं सर्वानुभवसिद्धं जगत पारमार्थिक सदेव इत्यङ्गीकरणीयम् । जगत: मिथ्यात्वे सर्वेऽपि व्यवहारा:एवं स्वक्रिया व्याघातादयोऽपि स्यु:। उक्तञ्च न्यायामृतकारेणापि प्रत्यक्षं कालत्रयाबाध्यत्वग्राहकमिति द्वितीय: तद्धि न कालत्रयेऽपि सत्त्वम्, मन्मतेऽप्यनित्यप्रपञ्चे तदभावात् । किं तु काल त्रयवृत्तियदसत्त्वं तदभाव: स च कदाचित्सत्वे गृहीतेऽपि गृहीतस्वैति प्रतिपन्नो-

पायी सत्त्वग्राहिणा प्रत्यक्षेण तदुपायी त्रैकालिकनिषेधप्रतियोगित्वरूप-मिथ्यात्वाभावसिद्धिः ।

स्वकाले ह्यस्तितां गृह्णन् साक्षात्कारस्त्रिकालगम् ।
प्रतिषेधं निरुन्धानो गृह्णात्येवात्यबाध्यताम् ॥

वेदेऽपि हि विषयस्याबाध्यत्वे ज्ञानप्रामाण्यमेव तन्त्रं न तु शब्दत्वं वा वर्तमानकालाद्यनवच्छेदेन स्वविषय सत्त्वग्राहित्वं वा सर्वकालादि-संबन्धित्वेन स्वविषयसत्त्वग्राहित्वं वा तन्त्रम्, उक्तप्रकारत्रययुक्तानाप्तवाक्य-विषयस्यात्यन्ताबाध्यत्वापातात् । तच्च तत्त्वावेदनरूपं प्रामाण्यं श्रौतज्ञान-स्येवाक्षजज्ञानस्याऽपि ज्ञानग्राहिणा साक्षिणा गृह्यते, प्रामाण्यस्य स्वत-स्त्वात् । न च रूप्यादि ज्ञानेष्विव बाधो वा दोषो वा निश्चिताः येन तदपोह्येत । तदुक्तम् -----

यदि स्वतस्त्वं प्रामाण्ये विश्वस्या कथं न ते ।
प्रामाण्यस्य च मर्यादाकालतो व्याहृता भवेत् ॥

इयांस्तु भेदः - "सत्सत्यम्" इत्यादि श्रुत्या ब्रह्मणो वर्तमान (न कालाद्य)नादिकालाद्यनवच्छेदेन सत्ता गृहीतेति तदा सा तदनवच्छिन्ना, प्रत्यक्षेण तु घटादेस्तदवच्छिन्नासा गृहीतेति, तत्र सा तदवच्छिन्नेति । यद्देश-कालप्रकारा (द्य) वच्छेदेन तु यस्य येन सत्ता गृहीता तदवच्छेदेन तस्याबाध्यत्वं प्रामाण्यमुक्तम् उभयसाधारणमिति प्रमाणेन प्रत्यक्षेण नित्यत्वाद्यसिद्धावपि

स्वोपाधौ त्रैकालिक निषेधप्रतियोगित्वरूपमात्यन्तिकबाध्यत्वं सिध्यत्येव । कालान्तरादिस्थमपि हि बाधकं किं यत्कालावच्छेदेनानेन स्वार्थो गृहीतस्तदवच्छेदेनैव तन्निषेधति ? अन्यावच्छेदेन वा ? आद्ये कथमस्य प्रामाण्यम् ? अन्त्येत्वनित्यत्वादिकमेव स्यान्न तु मिथ्यात्वम् । किं चानागतकालग्राही साक्षी स्वविषयस्य गगनादेःसाक्षात्स्वाविषयस्य घटदेरपि निर्दोषा तद्धि प्रामाण्यग्रहणद्वारा भाविबाधाभावं गृह्णात्येव । न हि विषयाबाधमनन्तर्भाव्यप्रामाण्य ग्रहणं नाम । त्यक्तव्यं च परणैव प्रत्यक्षस्य वर्तमानमात्रग्राहित्वम् , अन्यथा रूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेध प्रतियोगित्वरूपं मिथ्यात्वं प्रत्यक्षा न स्यात् । किंच ---

प्रातिभासिक वैधर्म्यं तव येन प्रसिध्यति ।
घटादेः परमार्थत्वं मम तेनैव सेत्स्यति ।।

अस्ति हि त्वन्मतेऽपि घटादेर्व्यावहारिक सत्त्वाय तज्ज्ञाने रूप्यादिधीतो विशेषः ।तथा च तेनैव विशेषेण तात्त्विकत्वसिद्धिः । किं च -

यथऽक्षासिद्धं विश्वस्य सत्यत्वं नैव तात्त्विकम् ।
तर्ह्यक्षासिद्धं रूप्यादिमिथ्यात्वं तात्त्विकं कथम् ।।

न हि घटः सन् रूप्यं मिथ्येति प्रत्यक्षयोमात्रयापि विशेषोऽनुभूयते । रूप्य मिथ्यात्वस्य कालान्तरबाध्यत्वे च न रूप्यं तात्त्विकं स्यात् । किं च ----

पारमार्थिक सत्यत्वं न चेत्प्रत्यक्षगोचरः ।
तन्निषेधश्रुतीनां स्यादप्रसक्तनिषेधता ।।

किं च ---

अतत्त्वं तात्त्विकत्वेन प्रपञ्चं नावभासयेत् ।
उक्ता यदि तदा तस्याऽतत्त्वावेदकता कथम् ।।

नहि व्यावहारिकं तथैव गृह्णद् अतत्त्वावेदकं भवति , किन्तु पारमार्थिकत्वेन । अनुभूयते च जाति लौकिकानां पारमार्थिकत्व धी: । तस्यात्प्रत्यक्षस्य प्रतिपन्नोपाधौ त्रैकालिक निषेध प्रतियोगित्वरूपमिथ्यात्वाभावग्राहित्वा तद्बाधिता दृश्यत्वादय: ।इति प्रत्यक्षस्य पारमार्थिक सत्त्वग्राहित्वम् ।

तथा च अनुमानप्रमाणेनापि प्रपञ्चस्य सत्यत्वं सिद्ध्यति । अनुमानं च इत्थं ब्रह्मप्रमान्येन वेदान्ततात्पर्यप्रमिति जन्य ज्ञानान्येन वा ,मोक्ष हेतु ज्ञानान्येन वा अबाध्यत्वेसति असत्वानधिकरणत्वेसति ब्रह्मान्यत्,वि मतं नासत् परमार्थ सत्, प्रातिभासिकत्वानाधिकरणत्वेसति असद्विलक्षणत्वात् , ब्रह्मवत्,तद्व्यतिरेकेण शशशृङ्गवद् इति । अस्यामयमाशय: यत् ब्रह्मप्रमा अथवा वेदान्ततात्पर्यप्रमिति जन्य प्रमा अथवा मोक्ष साधनभूत प्रमाभिन्न ज्ञानेन बाधितं न असत्त्वानधिकरणत्वेसति तथा ब्रह्मभिन्न व्यावहारिक प्रपञ्च अथवा विवादास्पदीभूत: प्रपञ्च: सत् अथवा पारमार्थिक सत् भवति । अत: शुक्तिरजतादि प्रातिभासिक एवं खपुष्पादि असद् विलक्षणत्वात् यथा ब्रह्म । अथवा यन्नैव तन्नैवं यथा शशशृङ्गम्, इत्थं च व्यतिरेकि उदाहरणं भवितुमर्हति । अत्रानुमाने न्यायामृतकारेण त्रिधा पक्ष निर्देश: कृत: । १-ब्रह्मप्रमा-

न्यैनाबाध्यत्वे सत्यसत्त्वासामानाधिकरणत्वेसति ब्रह्मान्यत् । २- वेदान्ततात्पर्य-प्रमाजन्यज्ञानान्यैनाबाध्यत्वेसति असत्त्वानधिकरणत्वेसति ब्रह्मान्यत् । ३-मोक्षहेतुज्ञानान्यैना बाध्यत्वे सति असत्त्वानधिकरणत्वेसति ब्रह्मान्यत् इति । शुद्धं ब्रह्म वृत्ति व्याप्यं भवति इति विवरणाकारमतानुसारेण प्रथम पदास्य निर्देश: कृत:,किन्तु भामतीकारमते अखण्डाकारवृत्तिर्ब्रह्मप्रमा भवति इति मन्यते, अत: वेदान्ततात्पर्यप्रमाजन्यप्रमापदेन निर्विकल्पकं ज्ञानं निर्दिष्टं एवं शाब्दबोधे तात्पर्य ज्ञानं न कारणम् इति मताकुसारिणाम् आचार्याणां मतेन मोक्षहेतु ज्ञानपदेन निष्प्रकारकं ज्ञानं अभिधीयते ।असत् पदार्थेषु व्यभिचार वारणार्थं असत्त्वा असत्त्वानधिकरणं तथा प्रातिभासिके व्यभिचारं निवारणाय प्रातिभासिकत्वानधिकरणं एवं असति व्यभिचार वारणाय असद्भिलक्षणत्वमुक्तम् । एवं सति अनेनानुमानेन प्रपञ्च: परमार्थ सत् सिद्ध्यति । अन्यच्च जात: सत्यत्व साधकमनुमानं विवादास्पदीभूत: प्रपञ्च: सत्य: प्रमाणसिद्धत्वात् आत्मवत्,अत्र हि दृष्टान्तभूते आत्मनि हेतु साध्यसामानाधिकरणदर्शनेन पक्षे हेतुत्वात् साध्यं सिद्ध्यति ।

अथ च अयं घट: एतन्निष्ठवाध्य भेदातिरिक्तभेदाश्रय: द्रव्यत्वात् ,पटवत् इत्यनुमानेनापि वियदादेरात्मनां च सत्यभेद: साध्यते । न चायमाक्षेप: कर्तुं शक्यते यत् प्रपञ्चस्य सत्यत्वे दृग् दृश्ययो: संबन्धस्य अनुपपत्तिर्भविष्यतीति चेत् नैवम् ,यत: ज्ञानविषययो: यद्यपि साक्षात् न कोऽपि सम्बन्ध: तथापि घटादि विषयकज्ञानस्य जनक इन्द्रिय लिङ्ग शब्दादीनां घटादिविषयकज्ञानस्य जनक इन्द्रिय लिङ्ग शब्दादीनां घटादिना सह सम्बन्ध: घटादि विषयकं प्रति घटादि विषयक ज्ञानानां नियामको भविष्यति। अयमाशय: ज्ञानस्य स्वविषयेण कस्यापि संबन्धस्याविद्यमानेऽपि अस्यज्ञानस्य अयं विषय: इतीयंव्यवस्था कथं स्यात्,इत्यस्यां शंकायां जाग्रयां इदं तावत् समा-

धानं कृतम् । यद्विषयेण सह संबद्धेन्द्रियादिना यज्ज्ञानमुत्पन्नं भवति तज्ज्ञानस्य स एव विषयः स्वीकरणीयः यथा घटसंयुक्त इन्द्रिय जन्य ज्ञानविषयः घटः, अतः ज्ञानविषययोः अतिरिक्त सम्बन्धस्याविद्यमानेऽपि न कोऽपि अतिप्रसङ्ग इति ।अपि च भेदस्य मिथ्यात्वे शब्दान्तरादिकर्म भेदक प्रमाणानां अप्रामाण्यं स्यात् । अयमर्थः शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः कर्मभेदो निरुपितो द्वादशलक्षण्यां द्वितीयाध्याये । १-तत्र यजति ददाति जुहोतीत्यादौ धातुभेदेन धात्वर्थभेदेऽपि भावना भिद्यते न वा? इति सन्देहे धातूनां भेदेऽपि भावनाभावनावाचकलिङ्गादेः सर्वत्र प्रत्ययभिज्ञयाऽभेदावगमात् धात्वर्थस्य च भावनां प्रति गुणभूतत्वाद्गुण भेदेन प्रधान भेदस्यान्याय्यत्वात् अभेद एवेति पूर्वपक्षाप्य धातोरिति विवक्षितैकवचनेन सूत्रेण कवातोरुपरि प्रत्ययविधानात्प्रत्येकं धात्वर्थानुरञ्जिताया भावनायाः प्रतीतेरेकानुरञ्जितायाश्चान्यानुरञ्जनायोगात्प्रतिधात्वर्थं भिद्यत एव भावनेति राद्धान्तितं "शब्दान्तरे कर्मभेदः कृतानुबन्धित्वादि" त्यत्र ,अयमर्थः - शब्दान्तरे धात्वन्तरे सति कर्मभेदः,भावनाभेदो भवितुमर्हति । कुतः? कृतानुबन्धत्वात् तेनैव कृतावच्छेदत्वात् भावनाया इति । सोयं शब्दान्तरात्मकर्मभेदः । २- यथा"समिधो यजति"तनूनपातं यजती" त्यादिषु पञ्चकृत्वो यजति श्रुतो किं प्रथमविहितस्यैव यागस्य पुनः पुनरभ्यासः ? उत पञ्चापि विधयः २ इति संदेहे शब्दान्तरे सति कर्मभेदस्य पूर्वाधिकरणे वर्णनात् द्वैवस्यैव यजतेः पुनः पुनः श्रवणात् तस्यैवायमभ्यासआदरार्थ इति पूर्वपक्षाप्याप्रवृत्तप्रवर्तकत्वाद्विधेः सर्वेषां च प्राथम्यार्हतया विध्यनुवादविनिगमाभावादानर्थक्यपरिहाराय भिन्नविधितया कर्मभेद इति सिद्धान्तितम् एकस्यैवं पुनः श्रुतिरविशेषादनार्थकं हि स्यादित्यत्र । अयमर्थः एकस्यविधेःपुनः श्रवणमपि एवं कर्मभेदकं,कुतः ? अविशेषात् विध्यनुवादविशेषा-

भावात् । इतरथा पुनः श्रवणं हि यस्मादमर्थकं स्यादिति । आनर्थक्ये वा हेतुविशेषादिति । सोऽयमभ्यासात्कर्मभेदः । ३- तथा सप्तदश प्राजापत्यान्पशूनालभते इत्यत्र किं सप्तदशपशुकमेकं कर्म ? उत सप्तदश कर्माणि विधीयन्ते? इति संशये प्राजापत्यानित्यत्र कृतैकशेषाणां पशूनां तद्धितेनैकप्रजापतिदेवताकत्वबोधनादेककर्मत्वमिति प्राप्य्य राद्धान्तितम् ,एककर्मत्वे हि एक एवातिदेशः स्यात् । ततश्चैकपशुनिष्ठमेकादशावदानमतिदेशप्राप्तमेकपशौ निष्पन्नमितीतरेषामदृष्टार्थता स्यात् । सप्तदशकर्मत्वे तु प्रतिपशु एकादशावदानसिद्धिरिति दृष्टार्थताऽतः कृततद्धितदेवतासंबन्धतया देवतासंबद्धानामेकशेष इति सप्तदशकर्माणीति । इदं भाष्यकारीयं मतम् ।वार्तिककारीयं तु तिस्र आहुतिर्जुहोतीत्यत्रैकस्य जुहोतेः श्रवणादेकहोमत्वम् । त्रित्वं तु एकादशप्रयाजादिवदावृत्त्येति प्राप्ते राद्धान्तः त्रिकस्य तावज्जुहोतिसामानाधिकरण्यमुत्सर्गतो होमभेदकभेदातिरिक्तसंख्यायाः पृथक्त्वसामानाधिकरण्य स्वरसत्त्वात् । क्वचित्त्वगत्याऽपवादः । एकादशप्रयाजादौ प्रकृतौ पञ्चत्वावधारणात् । नचेहतथा बाधकमस्तीति होमभेद इति । तदुक्तं पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यादिति । संख्ययापि हेतुना कर्मभेदः स्यात् । कुतः ? कर्मपृथक्त्वनिवेशात् , कर्मपृथक्त्वेनैव तस्या निवेशात् । एकातिरिक्तसंख्यायाः कर्मपृथक्त्वसामानाधिकरण्यादित्यर्थः । सोऽयं संख्यायाः कर्मभेदः । ४- तथा 'अथैष ज्योतिरथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इत्यत्र ज्योतिर्विश्वज्योतिः शब्दयोः प्रकृतज्योतिष्टोमानुवादकत्वं कर्मान्तरविधायकत्वं वा ? इति संशये सत्यशेषाशब्दस्य सर्वनाम्नः प्रकृतावमर्शित्वात् ज्योतिरादिशब्दस्य तत्समानाधिकरणत्वात्पूर्वकर्मानुवादे सहस्रदक्षिणालक्षणगुणान्तरं विधीयते इति प्राप्ते ज्योतिष्टोमशब्दस्य ज्योतिरादिशब्दानां च स्वरूपविलक्षणत्वात् भिन्नार्थत्वे संभवत्येकदेशलक्षणयैकार्थत्व कल्पनाया अगतिकगतित्वात् सर्वनाम्नश्च प्रस्तोष्य

मासपरामर्शितयापि संभवात् नामान्तरं कर्मान्तरं गमयतीति साधितं संज्ञा चोत्पत्तिसंयोगादित्यत्र । अयमर्थः संज्ञा च पूर्वविलक्षणा कर्मभेदिका । कुतः? उत्पत्तिसंयोगात् । कर्मस्वरूपज्ञापनसमय एव तस्य नाम्नः संयोगादिति । ५- तथा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र द्रव्यदेवतासंबन्धानुमितयागके किं पूर्वकर्मानुवादेनोत्तरत्र वाजिनगुणविधानम् ? उत कर्मान्तरं तद्गुणकम्? इति विषये वाजिभ्यः इत्यत्र वाजमन्नमेषामिति व्युत्पत्त्याऽमिक्षान्युक्त-विश्वदेवताककर्मानुवादेन वाजिनगुणविधानादेककर्मत्वमिति प्राप्ते वैश्वदेवीत्यत्र विश्वेदेवा देवता अस्या इत्यर्थेऽण् प्रत्ययविधानादन्तर्पतितमा परामृष्टामिक्षायास्तद्धितनिर्दिष्टविश्वदेवसंबन्धेन श्रौततया प्रबलेन सह वाजिभ्यो वाजिनमिति पदद्वयात्मकवाक्यागतवाजिनसंबन्धस्य विकल्पसमुच्चययोरभावाद्वाजिनगुणविशिष्टकर्मान्तरविधानमिति सिद्धान्तितं गुणश्चापूर्वसंयोगे वाक्ययोः समत्वादित्यत्र । गुणश्च कर्मभेदकः, अपूर्वकर्मसंयोगे पूर्वकर्मसंबन्धाभावे सति। कुतः वाक्ययोःसमत्वात् ।सो हि तदा वाक्यं भवतः ततोऽविघातमनेकं कर्मेत्यर्थः । सोयं गुणान्तरात्कर्मभेदः । ६- तथा अनिर्दिष्टदेशकालनिमित्तफलसंस्कार्यसंबन्धकर्मवाक्येषु मासमग्निहोत्रं जुहोतीत्यादिषु किं प्रकृताऽग्निहोत्रादौ मासादिगुणविधानम् ? उत तद्गुणकं कर्मान्तरविधानम् इति संदेहे कर्मान्तरविधाने गौरवप्रसङ्गादग्निहोत्रशब्देन तदनूद्य गुणमात्रविधानमिति पूर्वपक्षिते मासादेरनुपादेयतया साक्षाद्विधानायोगादग्निहोत्रादेश्च विच्छिन्न प्रकरणतया प्रत्यभिज्ञाभावात् च मासादि गुणविशिष्टं कर्मान्तरमेव विधीयते, अग्निहोत्रादिधर्मातिदेशार्थं चाग्निहोत्रादिनामोपदेश इति प्रकरणान्तरात् कर्मान्तरत्वं निरधारि प्रकरणान्तरे प्रयोगनान्यत्वमित्यत्र ।अयमर्थः -प्रकरणान्तरे सति प्रयोजनान्यत्वं विधेयभावनान्यत्वं स्यान्नतु पुनः पूर्वकर्मानुवादेन

तत्र गुणविधानमिति । तत्र :—

'शब्दान्तरं धातुभेदोऽभ्यासो विधिःपुनःश्रुतिः ।
उत्पत्तिस्था आविसंस्था संज्ञावाङ्ग्भपूर्वगम् ।।

सानुपादेय संबन्धौ अंनिधिः प्रक्रिया न्तरम् ।
इति शब्दान्तरादीनामुक्तं लक्ष्म विचक्षणैः ।'

तदेतदखिलमस्मीनिथावेव विधीयेत भेदमिथ्यात्व इति ।

अपि च 'निरुक्तसत्यम्'[1] 'यच्चिकेत सत्यमित् तन्न मोघम्'[2] 'याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः इत्यादि श्रुतिभिः'[3] 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्'[4] इत्यादि स्मृतिभिः[5] 'नाभाव उपलब्धेः' 'वैधर्म्याच्च न स्वप्नादिवत्'[6] इत्यादि सूत्रैश्च जगतः सत्यता प्रतिपाद्यते । 'विश्वं सत्यम्' इत्यस्मिन् मन्त्रे यत् प्रपन्च सत्यतायाःप्रतिपादनं क्रियते तत् प्रत्यक्षागत सत्यतायाः अनुवादो न भवितुमर्हति , यतः अद्वैतमतानुसारेण घटःसन् इत्यादि अनुभूतिषु ब्रह्मणः सत्त्वस्यैव स्फुरणं स्वीकृतम् । तद् भिन्नं त्रिकालाबाध्यत्व रूपं घटादि प्रपन्चगत सत्त्वं प्रत्यक्षेण नाधिगन्तुं शक्यते । अतः प्रत्यक्ष तत्सत्त्वस्य अनुवादकता अस्यां श्रुतौ कथं संभाव्यते ।

---

१- ऋ० २।७।३ ।।

२- ऋ० ८।१।१७ ।।

३- ईशा० - ८ ।।

४- गी० १६।८ ।।

५- ब्रसू० २।२।२८ ।।

६- ब्रसू० २।२।२९ ।।

किञ्च यथा पृथिवी इतरभिन्ना, पृथिवीत्वात् अस्मिन् व्यतिरेक्यनुमाने पृथिव्याः एकदेशभूते घटादौ इतरभेद प्रत्यक्षसिद्धावपि पृथिवीत्वावच्छेदेन सर्वासु पृथिवीषु असिद्धतया सिद्धसाधनं अनुवादकत्वं च अनुमाने न स्वीक्रियते । अथवा 'ब्राह्मणो न हन्तव्यः' इत्यादि वाक्येन ब्राह्मणादि केषुचित् प्राणिषु हिंसा निषेधस्य प्राप्तावपि सर्वप्राणिनां हिंसा निषेधस्य अप्राप्तत्वात् 'न हिंस्यात् सर्वाभूतानि' इत्यस्मिन् वाक्ये अनुवादकत्वं यथा नाङ्गीक्रियते, तथैव कतिपय घटादि पदार्थानां सत्यायां प्रत्यक्ष सिद्धावपि विश्वभावस्य सत्ता न प्रत्यक्षेण ज्ञाता, अतः 'विश्वं सत्यम्' इत्यादि वाक्येषु अनुवादकताया असम्भवः ।

अपि च 'स्वाध्यायोऽध्येतव्यः'[1] इदं विधायकं वाक्यं त्रैवर्णिक पुरुषाय केवलं एक स्वकीयशाखायाः अध्ययनस्य विधानं करोति । एवं समानप्रकारेण वाक्यं भिन्नार्थेऽपि शाखासु आयान्ति यथा अग्निहोत्रं जुहोति इत्यादि वाक्यं तेषु एकं वाक्यं विधायकं तथा समानार्थकं शाखान्तरस्थं वाक्यं ~~भिन्नशाखीय समानासु-अन्यार्थक~~ अनुवादकमेव न स्वीक्रियते, अपितु सर्वं वाक्यं विधायकमेव स्वस्य अधिकारिणां कृते अज्ञात ज्ञापकत्वात्, यथा शाखान्तराधिकरणे[2] वार्तिककारेणोक्तम् - 'न नाम पुनरुक्तता भवति, यत्र पूर्वोक्तोऽर्थः तस्यैव पुंसः सन्निहितो भवति'[3] तथैव 'घटः सन्' इत्यादि प्रत्यक्षं एवं 'विश्वं सत्यम्' एतच्छ्रुतिवाक्यं समानार्थकाधिकारित्वेऽपि नानुवादकम्, यतः स्वप्रत्यक्षे

---

१- शब्रा० ११।५।७ ॥

२- जैसू० २।४।१ ॥

३- तंवा०पृ० ६३६ ॥

विश्वासं प्राप्तस्य व्यक्तेः घटःसन् इदं प्रत्यक्षं प्रमाणमस्ति,अज्ञातज्ञप्रकाशकं च, किन्तु विविध मत मतान्तराणां प्रभावेण यस्य अस्तिक व्यक्तेःप्रत्यक्षो विश्वासो नास्ति तदर्थं विश्वसत्यम् इदवाक्यमेव अज्ञात ज्ञापकत्वात् प्रमाणं, सार्थकं च । तत्र श्रुति वाक्यं नानुवादकं न च व्यर्थम् ।

जैमिनि प्रणीत पूर्वमीमांसायां[१] अयं विचारःउपस्थापितः यत् चातुर्मास्य संज्ञक इष्टि विशेषो चत्वारि पर्वाणि भवन्ति १- वैश्वदेव २-वरुणःप्रघासः, ३-शाकमेध ,४- शुनासीर इति । तत्र हि द्वयोःप्रणयन्ति इदं विधायक वाक्यं श्रुतम् ,यस्य अयमर्थः चतुर्मास्य इष्टेः मध्यम द्वयोः सपक्षयोः वरुणप्रघास,शाकमेधयोः अग्निप्रणयनं अर्थात् गार्हपत्य कुण्डात् आवनीय कुण्डे अग्निप्रणयनं कर्तव्यम् । चातुर्मास्य कर्म इष्टिः अतो हेतोःदर्शपौर्णमासारुपस्य कर्मणः विकृतिः अतः प्रकृतिवद्विकृतिः कर्तव्या अनेन अतिदेश वाक्येन दर्शपौर्ण-मासविहित अग्नि प्रणयनरुपं अङ्गमपि चातुर्मास्य पर्वसु प्राप्तं तथा चातु-र्मास्य प्रकरणगतस्य द्वयोः प्रणयन्ति अनेन प्रत्यक्षा श्रुतवाक्यसामर्थ्येन अयं सिद्धयति यत् प्रकृतिवद्विकृतिः कर्तव्या अनेन अतिदेश वाक्येन प्राकृत अग्नि प्रणयन चातुर्मास्यस्य मध्यम भाविनी द्वे पर्वणि विहाय प्रथम अर्थात् वैश्वदेवे एवन्च चतुर्थे शुनासीरे भागे एवं प्राप्ते भवति , अतः मध्यभाविनोःद्वयोःपर्वणोःअप्राप्तं अग्नि प्रणयनस्य द्वयोः प्रणयन्ति अनेन वाक्येन क्रियते । एवमेव विश्वसत्यम् इत्यादि श्रुतिवाक्येन एतत्सिद्धं भवतीति यत् प्रत्यक्षप्रमाणेन प्रपन्चो केवलं व्या-वहारिक सत्वमेव गृह्यते,न च त्रिकालाबाध्यत्व रुपस्य पारमार्थिक सत्त्वस्य, अतः पारमार्थिक सत्यप्रमापकं इत्यादि श्रुतिवाक्यं न च अस्य वाक्यस्यानुवाद-कत्वम् ।

---

१- पू०मी० ७।२ ।।

अपि च यथा परमार्थिकसत्त्वनिषेधक श्रुत्यनुरोध बलेन अयं निर्णीयते, यत् 'सत्यम्' इत्यादि श्रुतिवाक्यस्य स्वमुख्यार्थे तात्पर्यं नास्ति, तथैव विशेष विनिगमनाभावात् तद्विपरीतं इदमपि वक्तुं शक्यते यत् 'विश्वं सत्यम्' इत्यादि श्रुति वाक्यं विश्वस्य पारमार्थिक सत्वं बोधयति तदनुरोधेन च अयं तावद् निश्चय: यत् 'नेहनानास्ति किञ्चन' इत्यादि श्रुतीनां स्वमुख्यार्थे तात्पर्यं नास्ति । अपि च घट सन् इत्यादि प्रत्यक्षेण ज्ञातस्य प्रपञ्चगत सत्त्वस्य अनुवादमात्रं करोति 'विश्वसत्यम्' इयं हि श्रुति,स्तर्हि सुखं सुप्तोऽस्मि साक्षीप्रत्यक्षेण प्राप्त सुखस्य अनुवाद मात्रं 'विज्ञानमानन्दं परम' इत्येतच्छ्रुतिवाक्यं अत: एवमेव आत्मन: आनन्दरूपत्वं क्थ सेत्स्यति ।

किन्तु इद तु पूर्वमुक्त तात्पर्य ग्राहक अभ्यासा रूप लिङ्गेन प्रतिपाद्य विषयस्य अकर्ष: दार्ढ्यं वा सम्पाद्यते, नानुवादमात्रम्, अत: छान्दोग्योपनिषद: षष्ठाध्याये तत्त्वमसि इत्यादि नवकृत्वाभ्यासेन जीव ब्रह्मणो: एकतायां दार्ढ्यमायाति । पिपासु व्यक्ते: एकमेव यद्रूपं विषयमनुमानं प्रत्यक्षादि विविध: प्रमाणं च पुष्टिं कुर्वन्ति, उपक्रमादि षड्विध लिङ्गं एकस्यैव विषयस्य बोधकं सत् विषयस्य दृढतां करोति ।

न किंचिदवेदिषम्[1] एवंप्रकारेण प्रत्यक्षावगत भावरूपाज्ञानमेव तम:[2] आसीत् इदं श्रुतिवाक्यं सुदृढं करोति । तथैव प्रत्यक्षं गृहीत प्रपञ्चगत सत्त्वस्य सुदृढीकरणे 'विश्वंसत्यम्' अस्य श्रुतिवाक्यस्य सदुपयोग: क्थं न क्रियते ।

---

१- बृ०छ० ३।६।३४ ॥

२- ऋ० १०।१२९।३ ॥

अपि च प्रत्यक्षप्रमाणान्तरं शब्दादेः अपेक्षा न भवति ,तथा सुषुप्तिकालीन सादिासिद्धाज्ञानस्य ङ दृढतायां 'तमः आसीत्' अस्य वाक्यस्य उपयोगो नास्ति,किन्तु अनुवादमात्रे तात्पर्यं मन्तव्यं भविष्यति, न च अनुवादकः शब्दप्रमाणम्,अतः तमः आसीत् इदं श्रुतिवाक्यं न प्रमाणम् । एवञ्च अग्निष्टोम कर्मणि सोमयागेऽपि तदङ्गभूतकर्मसु आग्निसोमीय,सवनीय अनुवन्ध्य इत्यादिषु त्रयः पशुयागः क्रियते ।तत्र अग्निसोमीय पशुयागः सर्वेषां पशु यागानां प्रकृतिः मन्यते,अतः अस्य पशुयागस्य सर्वाङ्गकलापानां प्राप्तिः 'प्रकृतिवद् विकृतिःकर्तव्या' अनेन अतिदेश वाक्येन अन्य विकृतिभूत पशु यागेषु जायते । अग्निसोमीयपाशोः संज्ञपनानन्तरं तस्यपशोः वक्र्यः गणयित्वा निःसार्यते । छागमृगादिपशूनां द्वयोःपार्श्वयोः त्रयोदश त्रयोदश वक्र्यः भवन्ति। एवं परस्परगणनया षड्विंशति वक्र्यः भवन्ति ।तच्च वंक्रिशब्देन उच्यते । वंक्रिनिःसारणसमये षड्विंशतिस्य वक्र्यः' अयं मन्त्रः उच्चार्यते ।अभिषिक्त चक्रवर्तिराजा अनुष्ठेयं अश्वमेधाख्यं कर्म सोमयागस्य एकस्य प्रकारः तथापि तस्य सोमाभिषवदिने त्रयः पशु यागाक्रियन्ते ।तत्र एक अश्वः एक तूपरः छागः अर्थात् गोमृगं अर्थात् गवयः तत्रापि पार्शव गणनासमये स एव मन्त्रःप्राप्यते, किन्तु 'चतुस्त्रिंशद्[1] गनिजोदेवबन्धोःवङ्क्रीरश्चस्य' अनयाऋचा उच्यते यत् अश्वस्य शरीरे चतुस्त्रिंशत् वक्र्यो वदन्ति ।अतस्त त्र चतुस्त्रिंशद् अस्य वक्र्यः अयं मन्त्रो उच्चारणीयो भविष्यति । तूपरादिषु षड्विंशति वक्र्यः एव भवन्ति । अतस्तत्र अश्ववंक्रीनां गणना न वेदत्,अतस्तस्मिन् प्रकरणे एकपरः षड्विंशतिरित्येव ब्रूयात् इदं वाक्यं निर्दिष्टम् ।अत्र च इदं स्पष्टं यत् प्राकृत षड्विंशति संख्यामध्ये चतुस्त्रिंशद विधानेन बाधिता जाता, तस्या एव प्रतिप्रसवः अर्थात्

---

१- ऋ०अष्ट०२ अ०ख० १० ।।

(पुनरुज्जीवनम्) 'षड्विंशतिरित्येव ब्रूयात्' इत्यनेन क्रियते । तथैव 'घट:सन्' इत्यादि प्रत्यक्षप्राप्तं प्रपञ्चगतं सत्त्वं तदेव 'नेह नानास्तिकिञ्चन' इत्यादि वाक्येन वाध्यते, तथैव तस्यैव प्रतिप्रसव: 'विश्वं सत्यम्' अनेन श्रुतिवाक्येन क्रियते नानुवादमात्रम् ।

किंच प्रपञ्च सत्त्वावगाहि प्रत्यक्षं प्रमाणं ? अप्रमाणं वा? यदि प्रमाणं स्वीक्रीयते, तर्हि तनैव प्रपञ्चमिथ्यात्वासाधकानुमानस्य श्रुत्यादीनां च बाध: संभविष्यत्यैव । यदि च प्रमाणं न स्वीक्रियते । तर्हि तदादाय 'विश्वं सत्यम्' अस्मिन् श्रुतिवाक्ये अनुवादकत्वं न सेत्स्यति , यत: एकप्रमाणप्रकाशित पदार्थस्य प्रकाशकं वाक्यमेव हि अनुवादकं उच्यते । अपि च श्रुति: स्वत: प्रमाणम् ,अत: तस्या: प्रमाणता प्रमाजनकता वा निर्विवादसिद्धा , प्रमात्वञ्च अनधिगतार्थविषयकज्ञानत्वम्, अत: 'विश्वं सत्यम्' अस्या: श्रुते: प्रामाण्यस्य संरक्षणाय तद्विषयस्य अधिगतसत्त्वसिद्ध्यर्थं च इदं तावत् अनिवार्यरूपेण मन्तव्य भविष्यति ,यत् घट सन् इति प्रत्यक्षेण अवधिगत पारमार्थिक सत्वस्य अवगाहिता प्रत्यक्षेण 'विश्वं सत्यम्' अस्यां श्रुते नानुवादकता । एवं 'घट: सन्' इत्यादि प्रत्यक्षं स्वप्रामाण्योपपत्त्यै 'विश्वं सत्यम्' अस्या: श्रुते: संवादं नापेक्षते ।अत: अस्मिन् श्रुति वाक्ये अनुवादकत्वस्यावश्यकता नास्ति अन्यथा 'विश्वसत्यत्व' श्रुतौ प्रत्यक्षप्राप्त सत्यत्वस्य अनुवादकत्व स्वीकृते 'सत्यंज्ञानमनन्तं ब्रह्म' 'नेहनानास्ति किंचन' इत्यादि श्रुतीनामपि अनुवादकत्वं स्वीकरणीयं भवेत्, यत: आसां श्रुतीनातात्पर्यं अद्वैत ब्रह्म सत्त्वस्य एवं जगत: मिथ्यात्वस्य च बोध मे अस्ति, ब्रह्मसत्त्वस्य अवगते हि सतप्स्फुरणादि सर्व लोकानुभवेन प्रमाधिष्ठानत्व लिङ्गक अर्थात् ब्रह्म सत् प्रमाधिष्ठानत्वात् इत्याद्यनुमिते: जायते । तथा जगत: मिथ्यात्वज्ञानं दृश्यत्वादि लिङ्गक प्रपञ्चो मिथ्यादृश्यत्वादित्यनुमानेन एवं वेद वाह्यविज्ञप्ति मात्रता वादादिना एव जायते ।

अपि च "विश्व सत्यम्" इदमपि वाक्यं अपौरुषेयं अनादि च अन्योपजीव्यमपि घट: सन् इदं सत्वप्रत्यक्षं न भवितुमर्हति, अत: श्रुती स्मृत्यादि ज्ञानवत् सापेक्षानुवादकत्वं न स्वीकृत्य निरपेक्षानुवादकत्वमेव मन्तव्यं भविष्यति, निरपेक्षानुवादकता हि अप्रामाण्यस्य प्रसज्जिका न भवति, यत: धारावाहिक ज्ञानस्थले द्वितीयादि ज्ञानेषु निरपेक्षानुवादकत्वस्य संभवेऽपि अप्रामाण्यं न मन्यते । नय विवेके श्री भगवनाथ मिश्रेणाप्युक्तम् "सापेक्षानुवादे हि न प्रमिति: , न तु स्वादनुवादे धारावहनवत्" ।

किं च प्रत्यक्षप्रमाणेन प्रपञ्चस्य सत्यत्वग्राहि तेऽपि विज्ञानवाद शून्यवादं ब्रह्मवादादिविविध विवादे प्रत्यक्षं विश्वसनीयं न भविष्यतीति, अत: उक्त वादादि विप्रतिपत्तीनां निरासाय यदि सत्यत्वानुवादिन्या: श्रुते:सदुपयोग: तदा तस्या: श्रुते: अवश्यं प्रामाण्यं स्वार्थपकरकं च स्वीकर्तव्यम् । यत: सप्रयोजनानुवादकत्वस्य सार्थक्यं प्रामाण्यं च विद्वद् वाक्येषु स्वीकृतम् । "दर्शपूर्णमास" संज्ञककर्मप्रकरणे पन्चवाक्यै: षण्णां कर्मणां विधानं कृतम् । "यदा[1]-- [2]"तावब्रूतामग्नीषोमावाजस्यै नावुपांशु पौर्णमास्यां यजन्" [3]"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत" [4]"ऐन्द्रं दध्यमावस्यायाम्" तथा "ऐन्द्रं पयोऽमावस्यायाम्" ।

---

१- तै०सं० २।६।३।३ ॥

२- शा०ब्रा० ३।६ ॥

३- तै०सं० २।५।२।३ ॥

४- तै०सं० २।५।४।१ ॥

अर्थात् पौर्णमास्यां तिथौ आग्नेययाग:, उपांशुयाज तथा अग्नि षोमीय याग: इमानि त्रिणि कर्माणि एवं एक आग्नेयी याग: तथा बौ ऐन्द्रयागौ इमानि त्रिणि कर्माणि अमावस्यायां तिथौ विहितानि। एवं पौर्णमास्यां तिथौ विहितानां त्रयाणां कर्मणा पौर्णमास: अमावस्यायां विहितानां त्रयाणां कर्मणां दर्श इति नामकरणंअनुवादरुपेण उक्तम्। य एवं विद्वान् पौर्ण मासीं यजते यावद् उक्थेनोपाप्नोति तावदुपाप्नोति। य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति, तावदुपाप्नोति अस्य अयमभिप्राय: भगवान् प्रजापति: यागानां रचनां कृत्वा तान् तुलायां धृतवान् तदा पौर्णमासाख्यं कर्म उक्थ्यसंस्थाक ज्योतिष्टोमाख्यं तथा अमावास्यायां कर्म अतिरात्रसंस्थाक ज्योतिष्टोमाख्यं च एतत्सर्वं तुलायां समानरूपेण जातम्। अत: अस्य तुलाख्यस्य कर्मण: यो विद्वान पौर्णमासी इत्याख्यं कर्म करोति, स उक्थेन सदृश: तथा योविद्वान् अमावास्या इत्याख्यं कर्म करोति, स अति रात्रेण सदृशं फलं प्राप्नोति। अत्र हि विकल्पदेन घटितं वाक्यद्वयमपि विद्वत् वाक्यमुच्यते। पूर्वमीमांसायां विचार: कृत:। विद्वत् वाक्यद्वयेनापि, पौर्णमास्या: त्रयाणां कर्मणां पौर्णमास इति तथा अमावास्याया त्रयाणां कर्मणां दर्श इति पदेन अनुवादस्य प्रयोजनं दर्शपौर्णमासाभ्यां स्वर्गकामोयजेत् अस्मिन् फलबोधके अधिकार वाक्ये उक्त द्वयो: तिथ्यो: विहितानां षट् कर्मणां।

द्विवचनान्तप्रयोगेण ग्रहणम्, त्रयाणां त्रयाणां कर्मणां द्वयो: समूहयो: द्विवचनान्तपदेन उल्लेख: उचित एव। अनेन इदं स्पष्टं भवति, सप्रयोजनानुवादकं वाक्यं स्वार्थपरकं भवति। अत: विद्वद्वाक्यानां अधिकार

---

१- तै०सं० २।६।६।१ ।।

२- पूर्वमीमा० २।२।३ ।।

वाक्येन सह वाक्यैकवाक्यता स्वीक्रीयते, न पदैकवाक्यता । यतः "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति" इत्यादि अर्थवादवत् येषां वाक्यानां स्वार्थतात्पर्यं न भवति, तेषां वाक्यानां प्रशस्तम् इत्यादि वाक्य सदृशवत् एकस्मिन् पदे लक्षण क्रियते, एवं तस्य एकस्य पदस्य विधिवाक्येन सह एकवाक्यता क्रियते, सा च पदैकवाक्यताशब्देनाभिधीयते, किन्तु दर्शपौर्णमासस्य अण्णां कर्मणां अनुवादक विद्द्वाख्यानां अधिकार वाक्येन सह कथमपि लक्षणां विनैव एकवाक्यता भवत्येव ।यतः विद्वत् वाक्यं स्वार्थपरकं भवति ।

अपि च यदि "विश्वं सत्यम्" अस्याःश्रुते अनुवादकत्वस्वीकारेऽपि, अस्यां निष्प्रयोजत्वमात्रमेव वक्तुं शक्यते, नाप्रामाण्यम्, यतः यथार्थं ज्ञानमेव प्रमाणं भवति "यथार्थं ज्ञानं विद्या" ।यदि अनधिगतत्वेसति याथार्थ्यम् एतदेव प्रामाण्यस्य लक्षणं क्रियेत तर्हि अनुवाद वाक्यानां अधिगत बोधकत्वात् अप्रामाण्यं आगच्छेत् किन्तु इदं तावल्लक्षणं नोचितम्, यतः स्मृतिप्रामाण्याधिकरणे शबर स्वामिना उक्तम् "प्रमाणं स्मृतिः"[2] मन्वादिस्मृति ग्रन्थेषु श्रौतवाक्येन अधिगतधर्मस्यैव प्रतिपादनं स्वीकृतम्, अतः यथार्थता अथवा अव्यभिचारतैव प्रमायाःप्रमात्वम् ;"विश्वं सत्यम्" इत्येतस्मिन् वाक्ये यथार्थ बोधजनकत्वात् प्रामाण्यस्य स्वीकरणं अत्यन्तं न्यायसंगतमेव ।

किन्तु "विश्वं सत्यम्" इयं हि श्रुतिः यदा प्रत्यक्षप्राप्त प्रपञ्च सत्यत्वस्य अनुवादिका स्यात्, तदा इयं जिज्ञासा उदेति यत् अयमनुवादः

---

१- तैत्सं० २।१।१ ।।
२- शिर पृ० ५१२ ।।
३- शा०भा पृ०-१६५ ।।

प्रशंसार्थक: ? अथवा कस्यापि अन्य वस्तुन विधानाय वा, नाद्य: पक्ष समीचीन:, यथा "वायव्यं श्वेतमालभेत भूतिकाम:"[1] अनया श्रुत्या विहित वायुदेवताक श्वेत छागद्रव्यक यागस्य स्तुत्यर्थं उक्तस्य विधे: वाक्यशेषभूत "वायुर्वै क्षेपिष्ठा देवता"[2] इत्येन वाक्येन वायुदेवतया: प्रशंसा क्रियते, तथा अत्र संभवो नास्ति, यथा "विश्वं सत्यम्" इदं वाक्यं न कस्यापि विधे: शेषभूतं यत: विधेयस्य स्तुतिं कुर्यात् । नापि द्वितीय: कल्प: यत: "अग्निहोत्रं जुहोति"[3] अनेन विधि वाक्येन विहित होमस्य "दध्ना जुहोति"[4] इदं हि वाक्यं "जुहोति" इत्यनेन पदेन अनुवादं कृत्वा दधि द्रव्यस्य यद्विधानं क्रियते, तत्रायं नियम: होमरूपयनुवाद्यं वस्तुपारमार्थिकम् न वारोपितम्, अन्यथा "व्रीहिभिर्यजेत" अनेन विधिना विहितस्य व्रीहे: यदि अतात्त्विकत्वं तर्हि "व्रीहीन् प्रोक्षति" इदं वाक्यं कमुद्देश्य प्रोक्षणस्य विधानं करिष्यति श्च अनुमानस्थले प्रत्यक्षागत पर्वतादे: अनुवादं कृत्वैव पर्वतो वह्निमान् अनेन वाक्येन वह्निमत्ता विधीयते, तत्र पर्वतरूप: आश्रय: भूतात्त्विक:, असिद्धो वा तर्हि यथा अनुमाने आश्रयासिद्धिदोषात् धर्मधर्मिसंसर्गस्य अनुमिति: यथा बाध्यते तथैव "विश्वं सत्यम्" इत्यादि वाक्ये उद्देश्यभूतं विश्वं यदि असिद्धं भवेत्, तदा उद्देश्य विधेय संसर्गबोधरूप शाब्दबोधोऽपि बाधितो भविष्यति, अत: विश्वरूपमनुवाद्यं तथा उद्देश्यं तात्त्विकं मन्तव्यम् ।

किन्च स्वाप्नप्रपन्चस्य ज्ञानविषयत्वेन यथा रजतादे: निषेध्यत्वेन अनुवाद: स्वीक्रीयते, अत: तस्य अतात्त्विकत्वेऽपि विश्वं सत्यम् -अत्र हि विश्व व्यवस्थाप्यतया अनुदित: अत: अस्य तात्त्विकं आवश्यकम् ।

---

१- तै०सं० २।१।१ ।।

२- तै०सं० २।१।१ ।।

३- तै०सं० १।५।९।५ ।।

४- आप०श्रौ० ६।३२।१२ ।।

"अपि च नेहनानास्ति किंचन" इत्येतत्छ्रुति वाक्यस्य घटकीभूतेन पदेनैव निषेध्य भूतस्य प्रपन्चस्य यदा अनुवादकत्वं सुलभं तर्हि "विश्वं सत्यम्" इत्यनेन वाक्येन निषेध्यस्य अनुवाद: व्यर्थ:, अत: "विश्वं सत्यम्" इयं हि श्रुति: विश्वगतसत्यत्वस्य व्यवस्थापिकैव, न निषेध्यानुवादिनी। अपि च "नेह नानास्ति किंचन" इत्यादि निषेध वाक्यानि वाक्यान्तरेण निषेध्यस्य उपस्थितिं नापेक्षन्ते, अपितु स्वशरीरघटकीभूतेन किंचन इत्यादिपदेनैव निषेध्यस्य उपस्थिति: कार्यते। यदि च निषेध वाक्यं निषेध्यसमर्पकहेतुभूतं वाक्यान्तरमपेक्षते तदा "न कलञ्जं भक्षयेत" इदमपि वाक्यं निषेध्यभूत कलञ्जस्य उपस्थित्यै "कलञ्जं भक्षयेत्" इत्येतद् वाक्यं वाक्यान्तरमपेक्षतयैव, यच्च न सुलभम्, अत: उक्त निषेधस्य असम्भवो भविष्यति।

अपि च "विश्वं सत्यम्" अयं मन्त्रभाग: प्रमाणान्तरेण प्राप्तस्य प्रापक: अथवा अनुवादको भवतु, तथापि इदं वाक्यं न निष्प्रयोजनम्, यत: अस्य मन्त्रभागस्य अन्तरेव हि "आपश्च न प्रमिनन्ति व्रतं वाम्" एवं प्रकारेण इन्द्रव्रतस्य अहिंसनरूप अज्ञातपदार्थस्य संकीर्तनम्, अत: अप्राप्त अलौकिक विधेयार्थे न स: विश्वसत्यताया: संसर्गस्य स्थापना क्रियते, अर्थात् हे इन्द्र यदिदं विश्वं सत्यमस्ति, तत् भवत: अकाट्य व्रतस्यफलम्, एवं प्रकारेण संगति करणार्थं विश्वसत्यताया: अनुवाद: उक्तनिषेध्य पदार्थस्य समर्पणायन। यदि हि "विश्वं सत्यम्" इयं श्रुति: प्रत्यक्ष प्राप्त प्रापकत्वात् स्वार्थपरा नास्ति, तर्हि मिथ्यात्वश्रुतिरपि "विश्वं सत्यम्" इत्यनयाश्रुत्या बाधितत्वात् स्वार्थपरा न भविष्यति, यत: अनुवादकत्वं स्वार्थपरत्वाभावे हेतु: तथैव बाधितत्वमपि। तस्मात् "विश्वं सत्यम्" वा युश्वान्तरीक्षं च एतदमृतं" "प्राणा: सत्यम्" आकाशवत् सर्वगतश्च नित्या: "मृत्तिका इत्येवसत्यम्" इत्याद्या: श्रुतय: विश्वसत्यत्वे

प्रमाणम् । तथा च कर्ताशास्त्रार्थ वत्त्वात् इदं सूत्रमपि प्रपन्चस्य सत्यत्वमेव अवगमयति । कर्ता च अयं जीवः स्यात्, कुतः शास्त्रार्थवत्त्वादिति । एवन्च यजेत जुहुयात् दधात, इत्येवं विधं शास्त्रं प्रपन्चस्य सत्यत्वे सत्येव अर्थवद् भवति । अन्यथा सर्वं शास्त्रं अनर्थकं स्यात्,तद्धि कर्तुं सतः कर्तव्यविशेषां उपदिशति न चासति कर्तृत्वे तदुपपद्यत ,तथा च इदमपि शास्त्रमर्थवद् भवति । एषा हि द्रष्टा,श्रोता,मन्ता,बोद्धा,कर्ता,विज्ञानात्मा पुरुषः इति । एवं एतत्सर्वं जीवे कर्तृत्वभोक्तृत्व दृष्टृत्व श्रोतृत्वादिकं सर्वं पारमार्थिकमेन अवगन्तव्यम् इति ।

## प्रपन्च मिथ्यात्वे प्रतिकूल तर्क निरुपणम्

यदद्वैतवादिनः प्रपन्चमिथ्यात्वसाधनाय प्रपन्चो मिथ्यादृश्यत्वात् ,शुक्तिरुप्यवत् इत्याद्यनुमानं प्रदर्श्यते तत् प्रतिकूल तर्केण पराहतं भवति। तत्र वक्ष्यमाणेषु प्रतिकूल तर्केषु प्रथमः अयं तर्कः उपस्थाप्यते तथाहि विश्वं यदि कल्पितं स्यात् , साधिष्ठानं स्यात् इति अर्थात् प्रत्येकं शुक्ति रजतादि कल्पितं वस्तु यत्रकुत्राप्यधिष्ठाने अध्यस्तं भवति, किन्तु समस्तं जगदेव यदिकल्पितं तर्हि तस्याधिष्ठानं किं भविष्यति । अधिष्ठानत्वं च सामान्यरुपेण ज्ञातत्वे सति विशेषतः अज्ञात शुक्त्यादिकं वस्त्वेव अधिष्ठानं उच्यते । ब्रह्म तु सर्वथा सामान्य विशेष भावरहितम्,अतस्तत्र विश्वकल्पनायाः अधिष्ठानत्वमसम्भवम्। किं च ब्रह्मरुपमधिष्ठानं तु सदा प्रकाशमानं अतिरोहितं च अधिष्ठानस्य तिरोधानमन्तरा अध्यासस्य संभव एवनास्ति ।यदि स्वयं प्रकाशरुपस्य ब्रह्मणः

तिरोधानमपि स्वीक्रियेत,तर्हि तत्र अध्यस्तस्य अविद्यादेः प्रकाशानुपपन्नः एव भविष्यति ।अपि च भवतामद्वैतवादिनामयं सिद्धान्तः यत् ब्रह्मपूर्णानन्दरूपमस्ति ।न च तत् पूर्णत्वानन्दत्वादि धर्मकम् , तर्हि न कश्चित् धर्म विशेषः न च तस्य प्रमराव समयै मानं भविष्यति,शुक्तित्वादि विशेष धर्माणां ज्ञानं विना अध्यासस्य निवृत्तिरेव न स्यात् । एवञ्च आरोपित तर्कः उपस्थितो भवति , विश्वं यदि कल्पितं स्यात् तदा सप्रधानं स्यात् इति । अति अध्यस्तु कथमपि औपचारिकी अथवा गौण प्रतीतिः, गौणप्रतीतिस्तु प्रधानं प्रतीति विना न संभाव्यते । यथा सिंहो माणवकः इयं हि गौणः प्रतीति तावत् कालपर्यन्तं नसम्भाव्यते,यावत् कालपर्यन्तं वास्तविकस्य अथवा प्रधान सिंहस्य प्रतीतिर्नभवेत् । प्रधान सिंहस्य अनुभवेन जनित संस्कारा एव माणवकरूप गौणासिंहस्य प्रत्यायको मन्यते तथैव आपणस्थ कालपनिक रजतानुभवेन उत्पादित संस्कारः एव हि शुक्तिरूप्यस्यौपचारिक रजतस्य प्रत्यापको भवति, अतः निष्कृष्टं तथ्यमिदमस्ति,यत् प्रत्येक काल्पनिक वस्तुनः वास्तविकं प्रधानरूपं प्रसिद्धं भवति ,अतः यदि दृश्यमानं प्रपञ्चः अध्यस्तः अथवा काल्पनिकः तदा अस्य वास्तविकं प्रधानं रूपं अन्यत्रकुत्रापि अवस्थितं मन्तव्यम् । किन्तु न च एवं सभाव्यते,अतः भेवं विधं दृश्यमानं जगत् काल्पनिकम्युपगन्तव्यम् । एतदेव अभिप्रेत्य उक्तं न्यायामृतकारेण - 'तथाहि ?यदि विश्वं कल्पितं स्यात्,तद साधिष्ठानादिकं स्यात् । भ्रान्तेरसदृशं सत्यं वाधिष्ठानं प्रधानं दोषमज्ञानं बाधकज्ञानं द्रष्टारं देहेन्द्रियादिकं च विनियोगात् । निस्सामान्यैनिर्विरोधे चात्मनि अधिष्ठानत्वे तत्रस्य सामान्यतो ज्ञाततो सत्यज्ञातविशेषवच्च स्याभावात् । उक्तं हि ----

अधिष्ठानस्य कात्स्न्येन ज्ञानेऽज्ञाने च न भ्रमः ।
ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते ।।इति।।

ननु न सामान्य ज्ञानं सद्विशेषाज्ञानं च तत्र तन्त्रम् ,गौरवात्। किं तु स्वरूपज्ञानं विशेषाज्ञानं च, लाघवात् । तच्च स्वप्रकाशे निर्विशेषे चात्यन्यस्तीति चेन्न त्वन्मतेऽपि भ्रान्तेस्संस्कारादित्रयजन्यत्वात् ।सामान्याकाराज्ञाने च संस्कारानुद्बोधात् । अद्विशेषाज्ञानस्य च बाधकालेऽपि सत्त्वात्। वल्मीके स्थाणुत्वभ्रमनिवर्तकस्यापि पुंस्त्वभ्रमस्य वल्मीकत्वप्रमानिवर्त्यत्वेनाततो भ्रमकालाज्ञाताधिष्ठानविशेषप्रमां विना भ्रमानिवृत्तेश्च । (ननु) अथ भ्रमविरोधिज्ञानाभावस्तत्र तन्त्रम् , न तु विशेषाज्ञानम् ।विश्वभ्रमोपादानाज्ञानस्य च श्रवणादिजन्यमात्ममात्रविषयं वृत्तिज्ञानं विरोधि न तु चिद्रूपज्ञानमिति चेन्न, तस्याविद्याविषयत्वे निरसिष्यमाणत्वात् ।

किं चात्मानात्मनोर्दृग्दृश्यत्वात्मत्वानात्मत्वादिना भेदज्ञानान्न तदधिष्ठानाध्यस्तभावः । उक्तम् हि त्वयैव ---

तदिदन्ते स्वतान्यत्वे त्वत्ताहन्ते परस्परम् ।
प्रतिद्वन्द्वितया लोके प्रसिद्धे नास्ति संशयः ।।इति।।

स्वयमात्मेति पर्यायौ -इति च ।अपि चाधिष्ठानतिरोधानं विनाध्यासासंभवस्य तवापि सम्मतत्वात् प्रकाशमानस्वभावस्य चात्मनः तिरोधाने प्रकाशनिह्नवत्वेन कथं तदधीनप्रकाशस्याविद्यादेरध्यस्तस्य प्रकाशः ? किं च

घटाद्यनुविद्धत्वेनाप्रतीतस्यात्मन: कथं तदधिष्ठानत्वम् ? न च सन् घट इति स्फुरति घट इति चात्मा तदनुविद्धतया भातीति युक्तम्, चाक्षुषादिज्ञाने रूपादिहीनात्माप्रतीतेरित्युक्तत्वात् । न च स्वप्रकाश सद्रूपभूतं घटाधिष्ठानं चैतन्यं स्वत एव भातीति युक्तम्, घटस्यापि तत्सम्बन्धेन स्फुरणसंभवे वृत्तिवैयर्थ्यात् । घट: स्फुरतीत्यस्य च स्फुरणानुभवत्वेन घटानुभवत्वायोगात् । नन्वक्यापि न प्रधानं भ्रमहेतु:, किंतु तत्संस्कार:, स च तत्प्रमयेव तद् भ्रमेणापि । अत्र च पूर्वपूर्वप्रपन्चभ्रम अनादि: । न च प्रमाजन्य एव संस्कारो भ्रमहेतु:, सत्यपि संस्कारे प्रमाजन्यत्वाभावेन भ्रमाभावादर्शनात् । न च तार्किकस्येवाध्यस्तमेव देशान्तरादौ सदित्यावयोर्मतम् । मैवम्, एवं सत्याधिष्ठानवीरेव भ्रमहेतु:, तद्धीश्च भ्रमरूपानादिरिति शून्यवादिरीत्याधिष्ठानस्याप्यसत्वापातेनाधिष्ठानत्वेन ब्रह्म सदिति त्वदुक्त्ययोगात् । अधिष्ठानवत्वप्रधानस्याप्यबाधात् । तथा च--

प्रधानमिव धीमात्रादधिष्ठानमपि भ्रमे ।
हेतुस्सुगतरीत्या स्यादबाधस्तु द्वयोस्सम: ।।

एतत्प्रपन्चास्य यथार्थक्रियाकारिणश्च तात्त्विकप्रपन्चान्तरस्याभावे स्वोचितार्थ क्रियाकारिण: श्रुत्यादिसिद्धोत्पत्त्यादिकस्यास्यैवात्मनइव स्वोपाधौ निषेधायोगेन तत्र तात्त्विकत्वापाताच्च । त्वन्मते प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य व्यावहारिकरूप्य विषयत्ववद् व्यावहारिक प्रपन्चेऽपि नेह नानेति त्रैकालिक निषेधस्य पारमार्थिकप्रपन्चान्तरविषयत्वावश्यंभावाच्च। प्रातिभासिकस्यैव पारमार्थिकत्वाकारेण त्रैकालिकनिषेध इति तु निरस्तम् । कल्पाद्य भ्रमायोगाच्च कल्पान्तरीय संस्काराद् भ्रमोत्पत्तौ च नारिकेरद्वीपवासिनो गुंजापुंजादावग्न्यारोप: स्यात् । एतज्जन्मन्यननुभूततिक्तरसस्यापि बालस्य गुडादावास्यगतपित्तद्रव्यनिष्ठतिक्तत्वारोपस्तु अनन्यगतिकत्वाज्जन्मान्तरीयसंस्कारजन्य: । यद्वा माषराशिस्थमष्यां माषाभेदारोप इव गृह्यमाणारोपोऽयं

न तु संस्कारजन्यः । किं च मैत्रेण मैत्र संस्काराध्यासोऽपि मैत्रस्य भ्रमादर्शनाद् जगद् भ्रम हेतु संस्कारस्य सत्वं दुर्वारम् । न च स्वेनाध्यस्तसंस्कारादेवभ्रमः भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासनियमाभावात् ।

किं च बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं श्रवणादिनियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यत्वं च न स्यात् । न हि देवतानिदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तं न वा दूरगमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तम् । न च नियमादृष्टं न बन्धनिवृत्तौ हेतुः, किं तु ब्रह्मापरोक्ष एवेति युक्तम्, अवघातसाध्यवे तुष्यान्यापूर्वस्येव श्रवणसाध्यापरोक्षान्यमुक्तौरेव साक्षात्कारे श्रवणनिरपेक्षस्योपायान्तरस्याप्रसक्त्या तत्प्रसक्त्यधीननियमविध्ययोगात् । न च परोक्षज्ञानमेव श्रवणादपरोक्ष ज्ञानं तु नियमादृष्टादिति युक्तम्, श्रवणविधौ परोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्षज्ञानस्यैव दृशिनिर्देशात्, साक्षात् कर्तव्य इति श्रुत्यन्तराच्च, तदन्यतः परोक्षज्ञाने कामनायोगेन तस्योद्देश्यत्वायोगाच्च । अपरोक्षस्यैव नियमादृष्टसाध्यत्वेऽपि तत्साध्यदेवतापरोक्ष्यनिवर्त्य दुरितवध्यस्तत्वायोगाच्च । किं च कल्पितत्वे स्वधीहेत्विन्द्रियासन्निकर्षात् प्रतिकर्मव्यवस्था न युक्ता स्यात् ।

किं च यदि जगत् कल्पितं स्यात्तदात्वन्मतेऽपि "जन्माद्यस्य यतः" इति सूत्रे "यतो वे" त्यादि श्रुतौ च जन्माद्युक्तिः "ईक्षतेर्नाशब्दम्" इति सूत्रे "तदैक्षत" इत्यादि श्रुतौ च ईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः "लोकवत्तु लीलाकैवल्यम्" इति सूत्रे

आप्तकामस्य का स्पृहेति श्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्याद्युक्तिः, "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इति सूत्रे "पुण्येन पुण्यं लोकं नयति" इत्यादिश्रुतौ च कर्मसापेक्षत्वेनावैषम्योक्तिः, "तेजोऽतस्तथा ह्याह" इति सूत्रे "वायोरग्नि-रित्यादिश्रुतौ च तेज आदेर्वाय्वादिजन्यत्वोक्तिः, "विपर्ययेण तु क्रमः" इति सूत्रे "पृथिव्यप्सु प्रलीयते" इति श्रुतौ च पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तम् स्यात् । न हि कल्पितस्य रूप्यादेर्जन्मादिकमीक्षा पूर्वं स्रष्टृत्वं वा तद्भ्रान्तेः प्रयोजनापेक्षा वा जीवस्य सुखदुःखेश्वरादिविभाग भ्रान्त्यैपूर्वस्य वैषम्यादिप्रसक्तिर्वा एकस्य कल्पितस्य कल्पितान्तरादुत्पत्तिर्वा तत्र लयो वा दृष्टः युक्तो वा । रूप्यादौ च जन्मेक्षापूर्वसृष्टत्वाभावेऽप्यसत्त्वमेव तंत्रम्, न तु तद्विशेषः प्रातिभासिकत्वं तन्त्रम्, ज्ञाननिवर्त्यत्वेऽपि तस्यैव तंत्रत्वापातात्, अनुमानमात्रोच्छेदस्योक्तत्वाच्च ।

न चेश्वरस्य मायाविवद् भ्रामयितृत्वात्प्रयोजनादिप्रसक्तिः । भ्रामयितुरीश्वरस्यापि सपरिकरस्य जीवैरध्यस्तत्वात् । नहीश्वरः स्वेन वा चिन्मात्रेण वाध्यस्तः । न च कल्पकं विना कल्पना । न च जीवानां वाय्वादिभ्योऽन्याद्युत्पत्तिभ्रमो वाऽस्ति, यः श्रुतेरालम्बनं स्यात् । न च भ्रान्तिं विना कल्पितमस्ति । न चैतद्वाक्यजभ्रान्तिसिद्धालम्बनेनैव एतद्वाक्यस्य प्रामाण्यम्, बौद्धागमस्यापि तत्प्रसंगात् । त्वन्मते भ्रान्तिहेतूनां देहेन्द्रियादीनां पृथिव्यादिकार्यत्वात् । ईश्वरस्य चाभ्रान्तत्वात् । भ्रान्तत्वे वा तद्भ्रान्तेरपि देहादिकार्यत्वादिति दिक् । तस्मान्नानुमानं विश्वमिथ्यात्वे मानम् ।

:o:——:o:

## चतुर्थोऽध्यायः

### आत्मनिरूपणम्

तत्र संसारेऽस्मिन् द्वौ पदार्थौ विद्येते आत्मा-अनात्मा चेति, दृग् दृश्यञ्च , प्रकाशश्च प्रकाशकश्चेति,नानाभिधानैरभिलप्यमानौ । अद्वैतिनो जीवात्मानं व्यापकं मन्यन्ते यथा नैयायिकाः । किन्तु तथात्वे द्वयोःसाम्येऽपि स्वरूपेऽन्यस्मिंश्च विषये महान् भेदः । न्याय नये ज्ञानाधिकरणात्मा ,अद्वैतमते ज्ञानरूप एवात्मा,न्यायनये - जीवाद् भिन्नःपरमात्मा । अतएव ते वदन्ति - आत्मा द्विविधः,जीवात्मापरमात्मा चेति । तत्र जीव, प्रतिशरीरभिन्नः परमात्मात्वेकश्च । अत्रेदं विवेक्तव्यम्-प्रतिशरीरं भेद स्वीकारे एकस्यैवात्मनो जन्मजन्मान्तरभेदेन शरीरभेदे आत्मभेदः प्रसज्येत् प्रतिशरीरमात्मनो भेदस्याभ्युपगमात् ।अतस्तस्याभिप्रायो वेदितव्यः -प्रतिशरीरमात्मा भिन्न इत्यस्यायमर्थः - एक-कालावच्छिन्नयोर्शरीरभिन्नशरीरभेदव्यापकभेदवान् जीवात्मा इति । योगिनः एककालावच्छेदेन योगबलादनेकशरीरधारणेन प्रारब्धभोगदर्शनादात्मभेदप्रसङ्गवारणाय योगिशरीरभेदप्रवेशः । जीवात्मनो जन्यभेदप्रयोज्यशरीरभेदप्रयोज्यानेकात्मत्वप्रसङ्गवारणाय एककालावच्छिन्नत्व प्रवेश इति पदकृत्यम् । एकस्यैव जीवस्य जन्मभेदप्रयोज्यात्मभेदस्वीकारे एकात्मनोऽनेकत्वप्रसङ्ग इत्येको दोषः , कृतहान्यकृताभ्युपगमप्रसङ्गश्च स्याताम् , अन्यशरीरावच्छिन्नात्मान्तरेण कृतस्य कर्मणो जन्मान्तरीयशरीरावच्छिन्नत्मनो देहभेदेन भेदात् तत् कर्तृत्वाभावात् तत्कर्मफलभोगायोगात् । तथा सति अतिप्रसङ्गात् । अनुभवस्मरणान्यथैककर्तृकत्वस्यैव कर्मतत्फलभागयोरभ्युपगमाद् दर्शनादनुभवाच्च ।

व्याप्ति - यद्विषयकानुभवज्ञानवान् यो भवति स एव तद्विषयक स्मृतिज्ञानवान् नान्यः इति नियमः । तथा चोक्तम् ---

'नान्यानुभूतिस्मरत्यन्यो नैकभूतमपक्रमात्'[1]

इति । अतएव पातञ्जलयोगसूत्रे ---

'अनुभूतविषयासम्प्रमोषः स्मृतिः' इति प्रोक्तम्[2] ।

यद्यप्ययं नियमो नास्ति यद यावन्तो विषया अनुभूतास्तेषां सर्वेषां स्मृतिर्भवेदेव, किन्तु या या स्मृतिर्भवति सा अनुभूतान्यविषयिणी एव। अनुभूतविषयातिरिक्तविषयकत्वाभावो नियमतः स्मृतौ भवत्येवेति व्याप्तिः। अनुभूतविषयविषयकसंस्कारोद् बोधाभावे तद्विषयकस्मरणाभावोपपत्तेः ।अतएव खण्डनखण्डखाद्यस्य[3] व्याख्यायां शारदाख्यायां श्रीमन्तोब्रह्मविदवरिष्ठवराः शङ्कर-चैतन्यभारतीस्वामिनः प्रकरणावसरे अविकल्पविषयःस्थाणुः पुरुषः श्रुतो-ऽस्ति यः श्रुतिषु । ईश्वरमुनयानपरं वदेनु मयापि तमधिगतम् इति मङ्गल-श्लोकव्याख्यानावसरे प्रोक्तम्[4] ----

अतएवानुभवस्य स्वसमानप्रकारकस्मृतिजनकत्वमिति न नियमः, किन्तु स्वीयप्रकारान्यप्रकारकस्मृतिजनकत्वमित्येव, अतएव अनुभूतविषया सम्प्रोषः स्मृतिः इति पातञ्जलसूत्रमपि सङ्गच्छते । अतो यथा स्मृति अनुभूत-

---

१- न्यायकुसुमाञ्जलिः ।।

२- योगसूत्रम् १।११ ।।

३- खण्डनखण्डखाद्यम् ।।

४- शारदाटीका पृ० २ ।।

विषयकैव भवति नानुभूतविषयिका, न चानुभूतिक्रमेणैव,अर्थात् येन क्रमेणा-नुभवस्तेनैव क्रमेण स्मृतिरपि भवेदिति नास्ति नियमः,व्युत्क्रमेण यत्किञ्चिद्विषयकत्वेन चोद्बोधकवशात् स्मृतेरुपपत्तेः।यथा चोक्तम् ---

"नानुभूतिक्रमाद् वर्णाः क्रमिका स्मृति गोचराः" इति । व्याकरणमहाभाष्यस्य व्याख्यानोपव्याख्या यां छायायां वैद्यनाथपायगुण्डे कृतायाम् ।अतः कथमपि एकस्य जीवस्य जन्मान्तरीय शरीरभेदप्रयोज्यभेदवत्त्वं तस्य न भवितुमर्हति, अनेकदोषप्रसङ्गात् दर्शितत्वाच्च तेषाम् ।

अद्वैतवादिनां मते जीवः सोपाधिकः ।अर्थात् शरीरान्तःकरणोपाधिवशाद् ब्रह्मैव जीव संज्ञां लभते । वस्तुतस्तु जीवो ब्रह्मैव नापरः ।तेषां मते भेदोऽपि न पारमार्थिकः किन्तु व्यावहारिकः प्रातिभासिको वा सोपाधिकः ।सोपाधिकभेदत्वं च उपाधिसत्ताव्याप्यसत्ताकत्वम् । तेषां मते एकजीववादः दृष्टिसृष्टिवादश्च मुख्यः ।अतएव ते "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादि महावाक्यस्य मुख्यसामानाधिकरण्यमङ्गीकृत्य जीवब्रह्मणोरैक्यमेव वेदान्तस्य विषयं स्वीकुर्वन्ति ।

तन्न कदापि युक्तं न वाक्यमपि उपपन्नमिति द्वैतीःमाध्वाः जीवमणु मन्यन्ते परस्परञ्च भिन्नम् । परमात्मा तु ब्रह्मभिन्न एव ।अतएव माध्वरीत्या पञ्चविधो भेदः प्रसिद्धः । जीवब्रह्मणोरैक्यं कदापि न सम्भवति। महावाक्यानां "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादीनां सोऽर्थो या निगदितो-ऽद्वैतिभिः ।

'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी'[1] इति गीताविरोधात् । अहमीश्वरः इति ज्ञानस्य तामसत्वमुक्तं गीतायाम् । उपनिषदि अपि काठके 'अनन्यप्रोक्ते गतिरत्र नास्ति'[2] इति स्पष्टतया दर्शनाच्च ।अनन्यरूपेण अभिन्नरूपेण जीवब्रह्मणोर्शिनि अहमेव ब्रह्म नान्यदस्तीति प्रोक्ते गुरूपदिष्टे स्वीकृते वा सति गतिः सद्गतिर्मोक्षः नास्ति । इत्यर्थ उपनिषद्वाक्यस्य ।

श्रौतिनस्तु 'अहमेव ब्रह्मेति' ज्ञानमेव मोक्षसाधनं वदन्ति पश्यन्तु पाठकाः यदा श्रुतिः स्वयमेव स्वहृदयं तात्पर्यमाह तदा तत्रान्यथान्यथाकल्पनां कृत्वा बलात्तदर्थस्यानर्थकरणमन्याय्यम् । यद्यपि तत्र शङ्कराचार्यैः बहवोऽन्ये कतिपया अर्था दर्शिताः किन्तु ते प्रसिद्धिविरोधादुपेक्ष्याः, आग्रहग्रस्तता तेषामाचार्याणाम् ।अतो मन्मत्या अणुस्वरूपस्य जीवनस्य सर्वथा भिन्ना व्यापकस्य सर्वेश्वरस्य भगवतो विष्णोः सत्ता भिन्ना इति प्रसिद्धः सिद्धान्तो बुद्धिमद्भ्योऽध्यात्मेश्वरवादश्च । तथा चोक्तं रामरुद्रभट्टाचार्यैः 'यद्यपि मानसान्य प्रत्यक्षं प्रत्यय महत्त्वस्य कारणत्वोपगमे नैषदोषः ।अतएव माध्वादिमते जीवानामणुत्वमवाङ्गीकृतम्'[3] इति ।

मध्वमतानुयायिनः आनन्दतीर्थीयपदव्यवहार्या आत्मानमणुमेव मन्यन्ते । यथा रामानुजाचार्यमते जीवात्मा अणुः परमेश्वरो व्यापकस्तथैव

---

१. गीता ॥

२. काठकोपनिषद् ॥

३. रामरुद्रीव्याख्या-प्रत्यक्षखण्डे मुक्तावलीग्रन्थे पृ० -१५६ ॥

मध्यमतेऽपि बोध्यम् । मध्वमते प्रमाणानां स्वतः प्रमाणत्वं वेदान्तानामपौरुषेयत्वं प्रपञ्चसत्यत्वं भेदपञ्चकपारमार्थिकत्वञ्च मान्यम् । अतएव यथा शोधप्रबन्धेऽस्मिन् पूर्वमेव प्रपञ्चगत सत्यत्वं, अनिर्वचनीयत्व खण्डनं वेदान्तानामपौरुषेयत्वञ्च यथा बुद्धि यथा पूर्वाचार्यमतं सुविस्तरमुपदर्शितम् । येन कथमपि मध्यमतमनभिव्यक्तं न भवेत् । मध्वमतं संक्षेपतो दर्शितवन्तः सर्वदर्शनसंग्रहे पूर्णप्रज्ञदर्शनप्रकरणे श्रीमद्विद्यारण्यमाधवाचार्याः---

"तदेतद्रामानुजमतं जीवाणुत्वदासत्व वेदापौरुषेयत्व सिद्धार्थबोधकत्व स्वतः प्रमाणत्व प्रमाणाभिन्नत्व पञ्चरात्रोपजीव्यत्वप्रपञ्चभेदसत्यत्वादि साम्येऽपि परस्परविरुद्धभेदाभेदादिपदान्वयकदीकारेण दापथकपदानिक्षिप्तमित्युपेक्षमाणः" स आत्मा तत्त्वमसि" इत्यादिवेदान्तवाक्यजातस्य[1] भङ्ग्यन्तरेणार्थान्तरपरत्वमुपपाद्य ब्रह्ममीमांसाविवरणव्याजेन आनन्दतीर्थः प्रस्थानान्तरमास्थिषत इति ।

मध्वमते जीवोऽणुः परमात्मा व्यापकः । तयोरभेदः वदन्ति अद्वैतिनः । द्वैतिनो माध्वास्तु जीवब्रह्मणोः पारमार्थिकमनौपाधिकञ्च भेदं मन्यन्ते । "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादि महावाक्यानां भेदार्थकत्वमेव मन्यन्ते । तथा चोक्तं सर्वदर्शनसंग्रहे - न च तत्त्वमस्यादितादात्म्यव्याकोपः । श्रुतितात्पर्यापरिज्ञानविजृम्भणात् ।

---

१- सर्वदर्शनसंग्रहः पूर्णप्रज्ञदर्शनम् ॥

आत्मनित्यपरोक्षाणां तु स्वच्छन्दो ह्यविशेषतः ।
स्वांशश्चापरोक्षार्थे तस्यैक्यं कथं भवेत् ॥

आदित्यो यूप इतिवत् सादृश्यार्था तु सा श्रुतिः । इति तथा च परमाश्रुति ---

जीवस्य परमैक्यं तु बुद्धिसारूप्यमेव तु ।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य सः ॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः
स्वातन्त्र्यपूर्णतेऽल्पत्वपरतन्त्र्ये विरूप्यते ॥इति॥

अथवा तत्त्वमसीत्यत्र स आत्मा स्वातन्त्र्यादिगुणोपेतत्वात् । अतत्त्वमसि त्वं तन्न भवसि तद्रहितत्वादित्यैक्यमतिशयेन निराकृतम् । तदाह अतत्त्वमिति वा छेदस्तेनैक्यं सुनिराकृतम् । इति तस्माद् दृष्टान्तनवकेऽपि "स यथा शकुनिः सूत्रेण प्रबद्धः"[1] इत्यादिना भेद एव दृष्टान्ताभिधानान्नायमभेदोपदेश इति तत्त्ववादरहस्यम् इति ।

जीवब्रह्मपारमैक्ये श्रुतिरैक्यवादात् बाधिका अनन्यप्रोक्ते गतिरत्रनास्ति[2] ।

---

१- सर्वदर्शनसंग्रह पूर्णप्रज्ञदर्शनम् प्रकरणे पृ० २७३, २७४ ॥

२- कठोपनिषद् ॥

किं च "मस्तर्केणानुसन्धत्ते सधर्मं वेद नेतरः" इत्युक्तेः चार्वाकाद् भिन्ना सर्वे दार्शनिकाः आत्मादि सत्त्वे परलोकसाधने चानुमानस्य प्रामाण्यमङ्गीचक्रुः । तच्चानुमानबाधिता व्यभिचरित सम्बन्धरूपा व्याप्तिरेव । अतोऽनुमानस्य प्रमाणत्वं सर्वेषामिष्टम् । अतएव श्रुतिरपि तर्कमनुमानमनुते "श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च" इति ।मननञ्च तर्कः ।स च द्विविधः कुतर्कः ,सतर्कश्च । तत्र कुतर्क एव शास्त्रे निषिद्धः ।"तर्क्यतांमां कुतर्क्यताम्" इत्यादिना । सत्तर्कस्तूपासनरूप एव ।अतएव उदयनाचार्यैः ----

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणान्तरमागता।।इति ।।

प्रोक्तम् । तर्क प्रवहस्यैव समाधिरूपत्वमुक्तयन्तो महामान्या विद्वन्मूर्धन्या अद्वैताचार्याः कृष्णभक्ताः पदवाक्यप्रमाणपारावारीणा मधुसूदनसरस्वतीस्वामि वर्याः सिद्धान्त बिन्दु ग्रन्थे । तथा वेदमाकूतं यदनुमानं परमं प्रमाणमिति ।अत एव न्यायशास्त्रप्रवर्तका आचार्याः प्राचीना अर्वाचीनाश्चानुमान खण्डे महान्तं यत्नं चक्रुः ।अत एव वदन्ति जनाः" न्यायेऽनुमानम् ,वाल्मीकीये हनुमान्" इति । तच्चानुमानं प्रमाणं जीवब्रह्मणोर्भेदमेवसाधयति । अयमपि जीवब्रह्मणोरैक्यं भवितुं नार्हति । यस्तु जीवमणुमल्पज्ञं पराधीनं कर्मवशगमीश्वरांशं ब्रह्म वदति स तु प्रायश्चित्तस्य भाजनम् । बृहदारण्यकशाङ्करभाष्ये तथैव प्रतिपादितम् ।कामं शङ्कराचार्यैः सपदाः पूर्वपक्षतया नीतं इत्यन्यदेतत् ।

---

१- कठोपनिषद् ।।

तच्च सर्वाचार्यानुमतप्रामाण्यमनुमानं जीवब्रह्मभेदं निराबाधं साधयति । यद्यप्यत्र यथा शक्ति स्वविचारितान्यपि अनुमानस्वरूपाणि प्रदर्शयितुं शक्यानि तथा न्यायामृतकारानुमतार्थकत्वादपार्थक्यान्न प्रदर्श्यन्ते, किन्तु व्यासराजयतिवर्यैः प्रयुक्तानि तानि उदाह्रियन्ते । तथाहि —

## जीवब्रह्मभेदे अनुमानविचारः

सन्त्यनुमानानि (१) ईश्वरः जीवप्रतियोगिकतात्त्विकभेदवान्, सर्वशक्तित्वात्, सर्वज्ञत्वात् सर्वकार्यकर्तृत्वात् स्वतन्त्रत्वाच्च व्यतिरेकेण जीववत्। (२) जीवो वा ब्रह्मप्रतियोगिकतात्त्विकभेदवान् अल्पशक्तित्वात्, अल्पज्ञत्वात् अल्पकर्तृत्वात् संसारित्वाच्च, किं व्यतिरेकेण ब्रह्मवत् । परमतेऽपि जीवब्रह्मणोर्व्यावहारिकभेदस्य सत्त्वात् पक्षे दृष्टान्ताभावः । अन्यथा परस्यापि जीवात्मान एव तत्त्वतः परमात्मनो नभिन्नाः आत्मत्वात्परमात्मवद् इत्यादि न स्यात् । एतेन सर्वाद्वैतवादिनं प्रति साध्याविशिष्ट्यादिदोषान्नभेदेऽनुमानोक्त्युक्तेति निरस्तम्, परेणापि स्वव्याहतिनिरासाय व्यावहारिक भेदमात्रेण हेतुसाध्यादि व्यवस्थायाः स्वीकृतत्वात् । भेदस्य वस्तुस्वरूपत्वेऽपि विशेषबलात् वस्तुविशेषणत्वं वास्तीत्युक्तत्वात् भेदवत्त्वं न बाधितम् । न चाप्रसिद्धविशेषणता, जीवब्रह्मभेदेऽनिष्टप्राप्तेर्वैदयमापत्त्वेन तद्विपर्ययस्याष्टद्रव्यातिरिक्तद्रव्यादेरिवानुमानायोग्यत्वात् । यद्वा (३) जीवः किंचिद्धर्मिकप्रतियोगिज्ञानाबाध्यभेदप्रतियोगि, अधिष्ठानत्वाच्छुक्तिवदिति सामान्यतस्तत्सिद्धेनाप्रसिद्धिः।

केचित्तु जीवाद् भिन्नः इत्येवसाध्यम्, तथा च नाप्रसिद्धिः । मिथ्या भेदेन सिद्धसाधनं तु निरसिष्यते । यद्वा ब्रह्मजीवप्रतियोगिकधर्मिसत्तासमान-

सघाकभेदवदिति साधनान्नाप्रसिद्धिर्नापि सिद्धसाधनम् । न चोभयत्राप्यसाधारण्यम् । तस्या गृह्यमाणविशेषावस्थायामेव दोषत्वादित्याहुः ।इतरे तु ब्रह्म जीवप्रतियोगिक तात्त्विकभेदवन्नेति साधनाप्रसिद्धिः ।परपक्षेऽपि घटादेर्जीवेन तात्त्विकभेदाभावादित्याहुः ।

अपरे त्विह साध्यस्य जीवप्रतियोगिकतात्त्विक भेदस्यान्योन्याभावरूपत्वान्नाप्रसिद्धिर्दोषः । सा हि व्याप्तिग्रहविघटकत्वेन दोषः । पक्षता तु सिषाधयिषाविरहसहकृतसाधकप्रमाणाभाववत्त्वादिरूपा सन्देहानपेक्षा । सापेक्षत्वेऽपि शब्दोऽभिधेय इत्यादाविव जीवब्रह्मणोर्भेदतात्त्विकत्वमस्ति न वेति सन्देहेनैव सा युक्ता । न तु ब्रह्म जीवात्तत्त्वतो भिन्नं न वेति सन्देहसापेक्षा व्यतिरेकिणि च साध्याभावस्य व्याप्तिः ।अत्र च साध्याभावो जीवाभेदो जीवे प्रसिद्धः । यत्र तु व्यतिरेकिणि भावः साध्यः,तत्राभावस्य भावज्ञानधीत्वात् सा दोष इत्याहुः।यद्वा ब्रह्म जीवाद् भिन्नम् । दुःखानुभवितृत्वात् ,घवादिति प्रयोगान्नाप्रसिद्धविशेषणत्वासाधारण्ये । न च मिथ्याभेदेन सिद्धसाधनम् ,भेदरूपार्थे साध्येऽर्थशून्यभ्रान्त्या सिद्धसाधनोक्ययोगात्। एतदनुमिति विषयतया प्रामाणिकत्वेन सिद्ध्यतो भेदस्य मिथ्यात्वायोगाच्च । अन्यथा त्वदीयेषु मिथ्यात्वानुमानेषु कल्पितमिथ्यात्वादिना सिद्ध साधनं स्यात् । तात्त्विकत्वविशेषणोऽपितात्त्विकत्वेन कल्पित भेदेन सिद्धसाधनमिति च स्यात् ।

(१) यद्वा ब्रह्म जीवप्रतियोगिकव्यभिसरासममानसराकभेदवत् ,दुःखानुभवितृत्वात्, अभ्रान्तत्वाद्,असंसारित्वाच्च, घटवत् । (२) जीवो वा ब्रह्म -

प्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवान् ,असर्वशक्तित्वाद्,असर्वज्ञत्वाद्,अस्वतन्त्र-
त्वाच्च,घटवदितिप्रयोगान्नदोषः । अत्र च जीवब्रह्मशब्देन त्वन्मतेऽपितत्त्वमसि
इत्यत्र तत् त्वं पदाभ्यां जीवाः परमात्मनः तत्त्वतो न भिद्यन्ते,आत्मत्वात्
परमात्मवदित्यत्र च जीवपरमात्मशब्दाभ्यां ये विवक्षिते,ते संसाराधारानाधा-
रचैतन्ये विवक्षिते ।ते च सत्ये इति न सिद्धसाधनम् । न च ब्रह्मणो धर्मित्वा
भावाद्बाधः, धर्मित्वाभावं प्रति धर्मित्वाधर्मित्वाभ्यां व्याघातात् ।इह
धर्मिशब्देनाश्रयमात्रस्य विवक्षितत्वाच्च । धर्मिशब्दस्य च पित्रादिशब्दवत्सम्ब-
न्धिशब्दत्वान्न मिथ्यात्वं प्रतिधर्मिभूतशुक्तिरूप्यसमानसत्ताक प्रातिभासिकभेदेन
सिद्धसाधनम्,न हि माता पूज्येत्युक्ते स्वसुतमाता भार्या पूज्यते । धर्मिपदस्थाने
स्वपद वास्तु । सत्तात्रैविध्यं वदतस्तव मतेऽपि क्वापि बाधाभावरूपाया वा
तदुपलक्षितस्वरूपरूपाया वा सत्तायाः एकत्वान्न बाधः । यद्वा धर्मिसत्तासमा-
नसत्ताकेति पदस्थाने पारमार्थिकेति यावत्स्वरूपमनुवर्तमानेतिवा स्वज्ञानाकार्येति
वा स्वज्ञानाबाध्येति वा विशेषणं देयम् । स्वशब्दस्य च च समभिव्याहृततत्त-
दर्थपरत्वस्य व्युत्पन्नत्वान्न कश्चिद्दोषः ।अन्यथा तवापि स्वप्रागभाव व्यति-
रिक्तत्या युक्त स्यात् । न चाधत्रार्थे साध्ये दृष्टान्तस्य साधनवैकल्यम् । घटो
जीवप्रतियोगिक (स्वज्ञानाबाध्यभेदवानिति) टिप्पणसंमतः पाठ । प्रतियोगि-
ज्ञानाबाध्याभेदाप्रतियोगितत्त्वज्ञानाबाध्यतत्प्रतियोगिकभेदवद् ,यथा दूरस्थ
वनस्पत्यौरिक इत्याद्यनुमानेन तत्सिद्धेः ।

यद्वा ब्रह्म,तत्त्वतो जीवाभिन्नं नेति, साध्यम्,एवं च न साध्य-
वैकल्यशंकाऽपि । त्वन्मतेऽपि कल्पिते घट अकल्पिताज्जीवात्तात्त्विकभेदवत्
तात्त्विकाभेदस्याप्यभावात् । न चान्तःकरणस्यैव दुःखानुभवितृत्वात् तदनुन-
भवितृत्वं जी~ नैकान्तम्,त्वन्मतेऽपि दुःखादेरन्तः करणधर्मत्वेऽपि व्याव-
हारिकस्य स्वतोऽनर्थरूपदुःखानुभावात्मक बन्धस्य मोक्षासामानाधिकरण्याय

जीवस्थत्वाश्यम्भाणत् ।त्वन्मतेऽपि पदनर्थरुपमहं दु:खीत्यनुभवितृत्वं जीवस्य तदभावो हेतुरिति न कश्चिद्दोषलेश:। न चासंसारिकत्वादेब्रह्मप्यसिद्धि: जीवेनकान्त्य वा , त्वन्मतेऽप्यौपाधिकस्याभत्वादिकस्य व्यवस्थितत्वात् । एवं च जीवेश्वरौ धर्मिज्ञानावाध्यपरस्परप्रतियोगिक भेदवन्तौ,विरुद्धधर्माधिकरणत्वात् दहनतुहिनवदित्यावपि सुस्थम् ।

विरोधश्च यद्यपि न सहानवस्थानम् ,अद्वैतितं प्रत्यसिद्धे:। नापि वध्यघातुभाव:,नाजातएकोऽन्यं हन्ति,नाप्यन्याधार इति न्यायेन तस्य भेदासाधकत्वात् । नापि परस्पराभावव्याप्यत्वं परस्पराभावरुपत्वं वा कालभेदेन नीलरूपं रक्त रूपं नीलरुपप्रागभावं च प्रत्याश्रयेपटे व्यभिचारात् ।तथापि परस्परात्यन्ताभावव्याप्यत्वं वा परस्परात्यन्ताभावरुपत्वं वा कालभेदेनापि सामानाधिकरण्यायोग्यत्वं वा विरोध: । संयोगतदत्यन्ताभावयोश्च सामानाधिकरण्यं नैत्यावयोर्मतमिति न तदाश्रये व्यभिचार:।तादृशविरुद्धधर्माश्च स्वतन्त्रत्वादय:।न चासिद्धि: --

अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्यय: ।।

'स्वाभाविकं तयोरेतन्नान्यथा तु कथञ्चने'त्यादि श्रुते: । न च कल्पितताया: सार्वज्ञासार्वज्ञादिव्यवस्थाया वर्णे दीर्घत्वह्रस्वत्वव्यवस्थावकल्पितभेदेनैवोपपत्त्या तात्त्विकं भेदं प्रत्यप्रयोजकत्वं सगुणवादोक्तन्याये: कृतसार्वज्ञादे: ब्रह्मणि प्रत्यक्षप्रामाण्यवादोक्तन्यायैर्नित्यनिर्दोषानुभवरुपसाक्षिसिद्धासार्वज्ञा-

देश्च जी वै सत्यत्वात् । एवं ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत् ,पदार्थत्वात्,घटवत् । जीवस्यापि जीवान्तराभिन्नत्वात् न व्यभिचार: ।चैतनत्वं जीवत्वावच्छिन्नप्रतियोगिताकधर्मि ज्ञानाबाध्यभेदवद्वृत्ति,सर्वचैतनवृत्तित्वाच्चैतनावृत्तित्वरहितत्वाद्वा,शब्दार्थत्व वदित्यादीनि चानुमानानि जीवेश्वरभेदे प्रमाणानि । विपक्षे ब्रह्मणोऽपि जीववत्संसाराथापत्ति: । एतेन ---

अप्रमेयेऽनुमानस्य प्रवृत्तिर्नैकां चन ।
प्रमेयस्य त्वनात्मत्वात्तत्र भेदानुमिष्यते ।।

इति निरस्तम्,त्वन्मतेऽप्यात्मन: शब्दलिङ्गादिजन्यवृत्तिव्याप्यत्वात् ।अन्यथा ----

अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कांचन ।
प्रमेयस्य त्वनात्मत्वाद्भेदस्यानुमिति कथम् ।।

## जीवानामन्योन्यभेदेऽनुमानादि विचार:

जीवानामन्योन्यं भेदे तु (१) चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्,मैत्रानुसंहितदु:खाननुसंधातृत्वात् ,घटवद् इह च वहन तुहिनादौ क्लृप्ततयानुसन्धानाननुसन्धानरूपविरुद्धधर्मयोरेव प्रयोजकत्वात् । (२) विगतं सुरभिधूमरहितं चन्दनप्रभववह्निरहितत्वादित्यादाविवासिद्धिवादकविशेषणत्वं

न दोषः । (३) एवं चैत्रो मैत्रप्रतियोगिकतात्त्विकभेदवान्न, मैत्रस्मृतसर्वास्मर्तृत्वात्, मैत्रानुभूतसर्वाननुभवितृत्वाच्च, परवत् । (४) विमतो बन्धध्वंसः स्वप्रतियोगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवन्निष्ठः, बन्धध्वंसत्वात्, सम्मतवत् । (५) जीव संसारी वा संसारध्वंसाधारो वा स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवान् स्वज्ञानाबाध्यसंसारिप्रतियोगिक भेदवान्वा स्वज्ञानाबाध्य संसारध्वंसाधिकरणप्रतियोगिकभेदवान्वा पदार्थत्वात्, घटवत्, विपक्षे बाधकस्य वक्ष्यमाणत्वात् नाभाससाम्यम् । आत्मभेदमात्रे तु आत्मा, आत्मप्रतियोगिक स्वज्ञानाबाध्यभेदवान्, पदार्थत्वाद्, घटवत् । विमत आनन्दः स्वनिष्ठ दुःखविरोधित्व व्याप्यधर्मेण सजातीयप्रतियोगिकस्वज्ञानाबाध्यभेदवान्, दुःखविरोधित्वात्, दुःखाभाववत् । आत्मवैभवपक्षे आकाशः आत्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधारविशेषगुणवद्विभुव्यतिरिक्तः, द्रव्यत्वात्, पृथिवीवदित्याद्यपि द्रष्टव्यम्। केचित्तु पृथिवीत्वं जलत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं मेयत्वात्, जलत्ववत् । गगनत्वजातिवादिनं प्रति गगनत्वेतरेत्यपि विशेषणीयम् । न चोक्तजातिमत्पदार्थान्तरसिद्ध्याऽर्थान्तरम्, लाघवेन क्लृप्ते धर्मिण्येव धर्मिणि धर्ममात्रेणानुमानपर्यवसानात् । सत्ता द्रव्यत्वान्यात्मनिष्ठजात्यन्या द्रव्यत्वं वा सत्तान्यात्मनिष्ठजात्यन्यत् , मेयत्वात्, घटत्ववत् ।आत्माणुत्वमते आत्मा द्रव्यत्व व्याप्यजातिमान्, अविभुद्रव्यत्वात्, पृथिवीवदित्यादिभिरात्मत्वजातिसिद्धौ तात्त्विकात्मभेदसिद्धिः । जातेर्धर्मिज्ञानाबाध्यभेदं विनाऽयोगात् । अन्यथा व्यक्त्यभेदः वापि दोषो न स्यात् । विपक्षे आत्मत्वस्य जातित्वे लाघवम्। औपाधिकत्वे तस्योपाधि ज्ञानाधीनत्वेन गौरवं बाधकम् । आकाशादिकं तु धर्मिग्राहकमानेनैकतया सिद्धमिति नाकाशत्वं जातिरित्याहुः । जीवानामन्योन्यभेदेऽनुमानानि ।

भेदपञ्चकेऽनुमानविचारः

जडेशभेदे जडजीवभेदे च (१) ब्रह्म जीवो वा अनात्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान, पदार्थत्वाद्, घटवत् । (२) ब्रह्म जीवो वा घटप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् ,घटासम्बद्धकालसम्बन्धित्वात् , तदसम्बद्धदेशसम्बन्धित्वात्,तज्जनकाजन्यत्वाद् वा पटवत् । (३) ब्रह्मजीवो वा जडप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्,जडानात्मकत्वाद्,यदेवं तदेवं यथा दूरस्थवनस्पत्योरैक्यः ।विपक्षे तु घटसिद्ध्यैव ब्रह्मसिद्ध्या वेदान्तवैयर्थ्यम् । ब्रह्मणो जडत्वानित्यत्वाद्यापत्तिः । मुक्तिसमानाधिकरण संसाराधारस्य जीवस्य जडवन्निवृत्त्यापत्तिः,गौरोऽहमित्यादिज्ञानं च प्रमा स्यादित्यादिबाधकम् ।

(१) जडानामन्योन्यं भेदे तु घटस्तत्त्वतश्शुक्त्यभिन्नो न शुक्तिसम्बद्धकालासम्बंधित्वात्,तज्जन काजन्यत्वात्,शुक्त्यारोपितरूप्यवत् । परमतेऽपि व्यावहारिक भेदस्य सत्त्वान्नासिद्ध्यादि शंक्यम् । अन्यथा भेद - सिद्ध्यासिद्ध्योर्दोषितदभावयोश्चाभेदेन स्वक्रियादि विरोधः स्यात् ।

(२) अनात्मा स्ववृत्तिधर्मानाधार ज्ञानाबाध्यान्तर्गीप कभेदवान्,पदार्थत्वाद्,आत्मवत् । विपक्षे दूरस्थवनस्पत्योश्शुक्तिरूप्ययोश्चाभेदग्राहि प्रत्यक्षं तत्त्वावेदकं स्यात् मुक्तिसंसारादि सांकर्यं च स्यादित्यादिबाधकम् । आत्मनां परस्परमात्मानात्मनोश्च तात्त्विकभेदे अनात्मा , स्वावृत्तिधर्माधिकरणप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणं यत् स्वावृत्ति धर्माधिकरणम्,तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणम्,पदार्थत्वाद्,आत्मवत् ,पक्षे स्वावृत्तिधर्माधिकरणमात्मा ततो भिन्नादात्मान्तराभिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते च स्वावृत्तिधर्माधिकरणं जडम्, ततो भिन्नात् जडा-

न्तरात् भिन्नत्वेन । भेदस्य तात्त्विकत्वार्थं प्रतियोगिज्ञानाबाध्येति विशेष-
णम् । जीवस्य ब्रह्मतो जीवाच्च जडस्य सत्यभेदे पृथिवी, ब्रह्मप्रतियोगिकधर्मिज्ञाना-
बाध्यभेदाधिकरणं यदप्त्वाद्यनधिकरणं तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेद
वती, वस्तुत्वात्, अंबुवत् । अप्त्वादीत्यादिशब्देन तद्वादिनः प्रति तद्वादि-
सिद्धाः पृथिवीत्वादन्ये जडनिष्ठा धर्मा विवक्षिताः । पक्षे ब्रह्मभिन्नाज्जी-
वाद्भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते तु ब्रह्मभिन्नात्पार्थिवाद्भिन्नत्वेनेति
ज्ञेयम् । जीवस्य ब्रह्मजीवान्तराभ्यां जीवाच्च जडस्य भेदे । पृथिवी, ब्रह्मप्रतियो-
गिकधर्मिज्ञानाबाध्यभेदाधिकरणम् यदप्त्वाद्यनधिकरणं आन्तर्गणिकभेदवच्च
तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवती, वस्तुत्वात्, अंकुवत । अत्र जीवस्य
जीवान्तरादपि भेदार्थं पूर्वस्यादधिकमान्तर्गणिकभेदवादिति । विशेषणम् ।
अत्र पक्षे ब्रह्मतः परस्परं च भिन्नाज्जीवाद्भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते
तु ब्रह्मतः परस्परं च भिन्नात्पार्थिवाद् भिन्नत्वेनेति ज्ञेयम् । जीवस्य ब्रह्मजीवा-
न्तराभ्यां जडस्य च जीवाद् ब्रह्मणो जडाच्च भेदे पृथिवी, ब्रह्मप्रतियोगिकधर्मिज्ञा-
नाबाध्यभेदाधिकरणं यदद्वाद्यनधिकरणं आन्तर्गणिकभेदवच्च तत्प्रतियोगिक-
प्रतियोगिज्ञानाबाध्यभेदवत्वे सति अप्त्वाद्यनाधिकरणासंसारिधर्मिकधर्मिज्ञाना-
बाध्य भेदप्रतियोगिनी, वस्तुत्वाद् अंबुवत् । अत्र च ब्रह्मणो जडादपि भेदार्थं पूर्व-
स्मादधिकमप्त्वाद्यनधिकरणासंसारीत्यादिविशेषणम् । अथपक्षे अप्त्वाद्यनधि-
करणासंसारि ब्रह्म, तद्धर्मिकभेदप्रतियोगित्वेन साध्यसिद्धिः । दृष्टान्ते तु अप्त्वा-
द्यनधिकरणासंसारि पार्थिवं, तद्धर्मिकभेदप्रतियोगित्वे नेति ज्ञेयम् ।

भेदमात्रे तु (१) ब्रह्मभेदहीनं नावतिष्ठते स्वज्ञानाबाध्यभेदवद्वा,
पदार्थत्वाद् घटवत् । (२) अनात्मा स्वान्यज्ञानाबाध्यभेदाधिकरणम्, पदार्थ-
त्वाद्, आत्मवत् । (३) ब्रह्मभेदो न सर्वनिष्ठात्यन्ताभावप्रतियोगी, ब्रह्मनिरू-

प्यत्वाद्,ब्रह्माभेदवत् । (४) ब्रह्मज्ञानं,स्वाबाध्यभेदवद्विषयम्,ज्ञानत्वात् शुक्तिज्ञानवत् । (५) घटो घटसंसर्गानवच्छिन्नप्रतियोगिकताकपदादिधर्मिक-त्रैकालिकाभावप्रतियोगी,द्रव्यत्वात्,पटवत् । अत्र विपक्षे बाधकानामुक्त-त्वात् नाभाससाम्यादि ।(६) एवं समानाधिकरण कर्मप्रागभावसमानकालीन ज्ञानबाधायोग्यो (ध्यो) भेद: परमार्थसन्,प्रातिभासिकत्वानधिकरणत्वे सत्य-सत्त्वानधिकरणत्वात्,स्वासत्त्वागोचरप्रमांप्रति साक्षाद्विषयत्वाद्,आरो-पितमिथ्यात्वकत्वात्, कल्पकरहितत्वात्,स्वविषयकसाक्षात्कारात्पूर्वभावि-त्वाध्यात्मवत् । (७) जीव ब्रह्मभेद: परमार्थसन् अनादित्वादात्मवत् ।(८) साक्षिवेद्य: सुखदु:खादि भेद: परमार्थसन्,अनिर्बाध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वाद्,आत्मवत् ।(९) धर्माधर्मयागदानादिभेद: परमार्थसन्,श्रुति-तात्पर्यविषयत्वाद्,ब्रह्मवदित्यत्याधूह्यम्[1] । सत्यत्वमानप्रस्तावे कृतइति ।

भेदभङ्गनिरास:

यत्तु भेदपञ्चकानुमानभङ्गाय कृत: प्रयास: विदुषा मधुसूदनसरस्व-तीस्वामिना स्वरचिते अद्वैतसिद्धि ग्रन्थे स सर्वोऽपि दर्शितेन भेदपञ्चकसाधका-नुमानप्रमाणेन निरस्तो वेदितव्य: । यच्च तद्ग्रन्थव्याख्यानग्रन्थे लघुचन्द्रिका-ख्ये चड्क्रमणं कृतं तन्मार्गानुसारिणा ब्रह्मानन्दसरस्वतीनाम केनाद्वैताग्रहग्रस्तेन तत्सर्वमपि सद्युक्तिनिर्मलवारिधारार्थी तमावेदितव्यम् । यच्चाद्वैतसिद्धौ भेदस्य व्यावहारिकत्वसाधनेन पारमार्थिकत्वासिद्ध्या पारमार्थिक भेदस्यैव पारमार्थिका

---

१- न्यायामृत द्वितीय: परिच्छेद: ॥

लासिद्ध्या पारमार्थिक भेदस्यैव पारमार्थिकाभेदविरोधाद विरोधान्नभेदसिद्धिरिति साधनाय द्वितीयपरिच्छेदे द्वैतसिद्धौ कृतमरण्यरोदनंस्वामिना तत्तु पूर्वोक्तत्रिविधसत्त्वनिरासयुक्त्यैव निरस्तमिति न तन्निरासप्रयासायाहं प्रयते सिद्धसाधनप्रसङ्गात् । यद्यपि निर्दिष्टप्रकरणप्रोक्तवचोविन्यास निरासाय पनुरत्र किंचिद्वक्तव्यं नावशिष्यते । किन्तु यदानुरूपो बालिः इति न्यायेन तदनिराकरणे तासां पृथगुक्तानां दोषाणां वज्रलेपायित त्वकथमपि निरासासम्भवादिकं कथयेपुरद्वैतिनोऽन्ये च प्रेक्षायन्तोः उपक्षीना प्रमे व्याप्तकत्याः स्युस्ते तदा न कथयेयुः श्रोतारश्च याथार्थ्यं जानन्तु इति धियाऽहं मूर्व यथाशक्ति यथाज्ञानं यथाप्रमाणं भेदं पारमार्थिकं माध्यवदसिद्धम सप्रमाणमुपस्थापयामि पुनरत्वशिष्टं विपरीतोक्तमयाकर्तुमत्र प्रवृत्तः । तथाहि ---

## अथा भेदपञ्चकेऽनुमानमङ्गलः

एवं जडेशभेदे जड़जीवभेदे च तात्त्विके प्रमाणंनास्ति (१)ब्रह्मजीवो वा,अनात्मप्रतियोगिकधर्मिज्ञानाबाध्य भेदवान्,पदार्थत्वात्,घटवत् ,(२)ब्रह्मजीवो वा घटप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्,घटसंम्बन्धिकालसम्बन्धित्वात्,तदसम्बन्धिदेशसम्बन्धित्वात् तज्जनकाजन्यत्वाद्वा पटवत् (३) ब्रह्मजीवो वा ,जड़प्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्,जड़ानात्मकत्वात्,यदेव तदेवं,यथा कूटस्थवनस्पत्यौरेक इत्यादिषु,पूर्वोक्तदोषानतिवृत्तेः परिच्छिन्नत्वस्य जड़त्वस्य जन्यत्वस्य चौपाधिदत्वात्, अप्रयोजकत्वात् च,जीवो ब्रह्म वा, आत्मप्रतियोगिकतादृग्भेदाधिकरणम्,पदार्थत्वादित्याभास साम्याच्च । न च घटाभेदे घटसिद्धयैव तत्सिद्ध्या वेदान्तवैयर्थ्यम् , ब्रह्मणो जड़त्वानित्यत्वाद्यापत्तिः,मुक्तिसमानाधिरण वन्धाधारस्य जीवस्य जड़वन्निवृत्त्यापत्तिः,गौरोऽहमित्यादि प्रतीतिश्च

प्रमा स्यादित्यादिविपक्षबाधकान्नमाससाम्यादिकमिति वाच्यम्,स्वप्रकाशत्वेन सर्वप्रत्ययवेद्यत्वेन च ब्रह्मसिद्धावपि सविलासाज्ञाननिवर्तक ज्ञानाय वेदान्तसाफल्यस्य बहुधाभिधानात् ,घटादौ कल्पितव्यक्त्यन्तरेणाकाल्पितभेदस्याभावेऽपि न यथा कल्पितव्यमत्यात्मकत्वं तद्वत् प्रातिभासिकत्वं तद्वद्विशेषदर्शनेन निवृत्तिर्वा कल्पितव्यक्त्यन्तरैक्य ज्ञानप्रमात्वं वा, तथा प्रकृतेऽपि कल्पित जडेन तदभावेऽपि न तदात्मकत्वादिति न विवदा बाधकस्याप्रसरः,एवं जडानामन्योन्यभेदेऽपि नानुमानम् । (१) घटः ,तात्त्वतः शुक्त्यभिन्नो न शुक्तिसंबद्धकालासवान्यत्वात्,तज्जनकाजन्यत्वारोपितरूप्यवत्,व्यावहारिक भेदस्य त्वयाप्यङ्गीकारेण न पक्षा दृष्टान्तानुपपत्तिः,अन्यथा भेद सिद्धसिद्धौ दोषात्तदभावयोश्चाभेदेन स्वक्रियाविरोधः स्यादिति । अत्र तात्त्विकशुक्त्यभिन्नत्वरूपप्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धेः,तत्त्वतः इत्यस्य नेत्यत्र विशेषणत्वे सुतरामप्रसिद्धेः,घटादिसम्सत्ताकभेदमात्रेण हेतोरुपपत्त्या अप्रयोजकत्वाच्च, भेदस्य तात्त्विकत्वे बाधकस्योक्तत्वेन बाधाच्च । (२) अनात्मा,स्ववृत्तिधर्मानाधारज्ञानबाध्यान्तर्गणिक भेदवान्,पदार्थत्वादात्मवत् विपक्षे च दूरस्थ दूरस्थ वनस्पत्योः शुक्तिरूप्ययोश्चाभेद ग्राहिप्रत्यक्षं न तत्त्वावेदकं स्यात् मुक्तिसंसारितदिशाक्ष्यं च स्यादित्यादि बाधकमिति यत्,तन्न एकत्र घटे कल्पिता ये अनेके घटाः ,तेषु स्ववृत्तिधर्मानधिकरण घटज्ञानबाध्य भेदवस्तु व्यभिचारात् ।यत्किंचित्स्ववृत्तिधर्मानाधारोक्तौ घटत्वानधिकरणपर ज्ञाना बाध्यभेदनात्मज्ञानबाध्यभेदेनात्मज्ञानबाध्येनार्थान्तरम् । स्ववृत्त्यशेषधर्मानाधारोक्तौ तन्मते ब्रह्मणोऽपि वाच्यत्वादिकेवलान्वयिधर्माधारत्वेन साध्याप्रसिद्धेः, कल्पितेन सह तात्त्विकभेदाभाववत् तात्त्विकाभेदस्याप्यभावेन उदाहृतस्थले तत्त्वावेदकत्वाताङ्क्यादीनामप्रसङ्गात् ।

११६ यत्तु आत्मनामात्मानात्मनोश्च परस्परं तात्त्विक भेदे अनात्मा, स्वावृत्तिधर्माधिकरण प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणं, मत्स्वावृत्तिधर्माधिकरणं तत्प्रतियोगिक प्रतियोगिज्ञानाबाध्यभेदाधिकरणम्, पदार्थत्वादात्मवत् पक्षे स्वावृत्तिधर्माधिकरणमात्मा ततो भिन्नादात्मान्तराद् भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते च स्वावृत्तिधर्माधिकरणं जडं, ततो भिन्नात्, जडान्तराद् भिन्नत्वेन साध्यसत्त्वमिति, तन्न, पक्षदृष्टान्तयोः स्वपदार्थप्रतियोगिपदार्थयोरननुगमेन व्याप्यत्वासिद्धेः, अजडत्वस्योपाधिकत्वाच्च, जडत्वेन व्यतिरेकिणा सत्प्रतिपक्षाच्च । यद्यपि जीवस्य ब्रह्मतो जीवाच्च जडस्य सत्य भेदे पृथिवी ब्रह्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणं यदप्त्वाद्यनधिकरणं तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवती, वस्तुत्वात्तोयवत्, अप्त्वादीत्यादिशब्देन तद्वादिनः प्रति तत्कादिसिद्धाः पृथिवीत्वभिन्नाः जडनिष्ठधर्मा विवक्षिताः। पक्षे ब्रह्मभिन्नाज्जीवात् भिन्नत्वेन साध्यसिद्धिः, दृष्टान्ते तु ब्रह्मभिन्नपार्थिवभिन्नत्वेनेति तन्न । अप्त्वाद्यनधिकरणत्वज्जीवत्वानधिकरणेत्यापि विशेषणं दत्त्वा जीवब्रह्मभिन्नात्मनोऽपि साधनप्रसङ्गात्, गन्धाधारत्वादिव्यतिरेकिणा सत्प्रतिपक्षासंभवाच्च, धर्मिविकल्पनिबन्धनदोषातादवस्थ्याच्च ।

एतेन जीवस्य ब्रह्मजीवान्तराभ्यां जीवाच्च जडस्य भेदे पूर्वप्रयोग एव जीवस्य जीवान्तराद्भेदसिद्ध्यर्थमन्तर्गणि वर्णेदवदि त्वानधिकरणेत्यत्र विशेषणं दत्त्वानुमानम् । अत्र च पक्षे ब्रह्मणा परस्परं च भिन्नाज्जीवात् अत्र च पक्षे प्रथमणा परस्परं च भिन्ना जीवात् भिन्नत्वेन साध्यसिद्धिः, दृष्टान्ते तु ब्रह्मणः परस्य एन्च भिन्नात् पार्थिवात् भिन्नत्वेनेतिनिरस्तम्,

जीवस्य ब्रह्मजीवान्तराभ्यां जडस्य च जीवात् ब्रह्मणो जडाच्च भेदे पृथिवी ब्रह्म-
प्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणं अप्त्वाद्यनधिकरणमन्तर्गापि भेदवच्च
यत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवत्त्वे सति अप्त्वाद्यनधिकरणासंसारिधर्मिक
धर्मिज्ञानाबाध्यभेदप्रतियोगिनी, वस्तुत्वादम्बुवदित्यत्र ब्रह्मणो जडादपि भेदार्थं
पूर्वस्यादधिकमप्त्वानधिकरणासंसारीत्यादिविशेषणम् । अत्र पक्षे अप्त्वाद्य-
नधिकरणसंसारि ब्रह्म, तद्धर्मिकभेदप्रतियोगित्वेन साध्यासिद्धिः दृष्टान्तान्तेत्व-
प्त्वाद्यनधिकरणासंसारि पार्थिवम्, तद्धर्मिकभेदप्रतियोगित्वेन ज्ञेयम् । अत्र जीव-
त्वानधिकरणत्वस्य अप्त्वानधिकरणेत्यत्र विशेषणत्वेन पूर्ववदाभाससाम्यात्,
पक्षरूपाधिकरणत्वादिना सत्प्रतिपक्षाच्च, धर्मादिपदविकल्पग्रासाच्च ।

एवं भेदमात्रेऽपि नानुमानम् । (१) ब्रह्म, भेदहीनं नावतिष्ठते
स्वज्ञानाबाध्यभेदवद्वा, पदार्थत्वात्, घटवत्, इति, मुक्तान्यसद्वृत्तित्वस्य जडत्व-
स्य चोपाधिकत्वात्, स्वपदविकल्पग्रासाच्च । (२) एतेन अनात्मा, स्वान्यज्ञाना-
बाध्यभेदाधिकरणम् पदार्थत्वात्, आत्मवदिति निरस्तम् । (३) ब्रह्मभेदो न सर्वनि-
ष्ठात्यन्ताभावप्रतियोगि, ब्रह्मनिरूप्यत्वात्, ब्रह्माभेदवदित्यत्र ब्रह्मभाभिन्नावृत्ति-
त्वमुपाधिः ब्रह्मभेदस्याब्रह्मनिरूप्यत्वेन तदनिरूप्यतया साधनवैकल्यं च ।
(४) ब्रह्मज्ञानं, स्वाबाध्यभेदवद्विषयकम्, ज्ञानत्वाच्छुक्तिज्ञानवदित्यत्रानात्मवि-
षयत्वमुपाधिः । स्वपदेन ब्रह्मज्ञानोक्तौ तदबाध्यभेदाप्रसिद्ध्या साध्याप्रसिद्धिः,
शुक्तिज्ञानोक्तौ तदबाध्यभेदाप्रसिद्ध्या साध्याप्रसिद्धिः, शुक्तिज्ञानोक्तौ सिद्ध-
साधनम् । (५) घटो घटसंसर्गानवच्छिन्नप्रतियोगिताकपदादिधर्मिकैकालिका-
भावप्रतियोगि, द्रव्यत्वात्, पटवदित्यत्र कात्यन्तिकाभावस्यापि कालत्रयवृत्तित्व-
संभवेन सिद्धसाधनम्, घटसंसर्गानवच्छिन्नेति तादात्म्यानवच्छिन्नेत्यपि विशेषणं

दत्त्वा पञ्चमभावसाधनस्यापि प्रसङ्गश्च, विपक्षबाधकाभावस्य उभयत्रसत्त्वात्। (६) समानाधिकरणकर्मप्रागभावसमानकालीनज्ञानबाधायोग्यौ भेदः, परमार्थसन्, प्रातिभासिकत्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वात्, स्वासत्त्वागोचर प्रमां प्रति साक्षाद्विषयत्वात्, आरोपितमिथ्यात्वकत्वात्, कल्पकरहितत्वात्, स्वविषयकसाक्षात्कारात् पूर्वभावित्वात्, आत्मवत् । (७) ब्रह्म जीवप्रतियोगिकौ भेदः, परमार्थसन, अनादित्वादात्मवत् । (८) सादिविषसुखदुःखादिभेदः परमार्थसन्, अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रतिसाक्षाद्विषयत्वात् । (९) धर्मधर्मियागदानादिभेदः, परमार्थसन्, श्रुतितात्पर्यविषयत्वादित्यादिष्वात्मासाधारणधर्माणां चैतन्यादीनामुपाधित्वं जड़त्वादिना सत्प्रतिपक्षाश्चमिथ्यात्वसाधकानां प्राबल्यस्योक्तत्वेन तेबाधश्च । आद्ये च प्रातिभासिकत्वस्य दोषाप्रयुक्तमानत्वात्मकत्वे असिद्धिः, ब्रह्मज्ञानेतरबाध्यत्वोक्तौ चरमवृत्त्यव्यवहित प्रातिभासिके व्यभिचारश्च । द्वितीय हेतौ तादृक् प्रमाविषयत्वस्यभेदपारमार्थिकत्वसिद्ध्यधीनत्वेन साध्याविशेषणपर्यवसानम् । तृतीये चरमवृत्त्यन्यबाध्यमिथ्यात्वकत्वस्योपाधित्वम् । चतुर्थे अविद्यारूपकल्पक सत्त्वेनासिद्धिः । पञ्चमे दृष्टि सृष्टिपक्षे असिद्धिः, इतरत्राप्रयोजकता । अनादित्वं च अज्ञानादौ व्यभिचारि । दोषाजन्य ज्ञानं प्रतीत्यत्र श्रुतितात्पर्यं विषयत्वादित्यत्र चासिद्धिः, साद्यवच्छेदकत्वे दोषाजन्यत्वात्, मुख्यतत्तात्पर्यस्य तत्राभावात् । तस्मात् भेदपञ्चकं नानुमान विषयः इति परद्वैतवादितां मतं तत्सर्वथा युक्तिदीनम् यतः भेदपञ्चके प्रमाणसिद्धत्वात्तं अनुमानप्रमाण पूर्वमेवसाधितत्वात्, ताश्रुतेः द्वा सुपर्णा सयुजासखायौ इति तथा च "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादि श्रुतिभिः भेदपञ्चकमेव साधितं भवति ।

## भेदश्रुतेरनुवादकत्वविचार:

किं च 'द्वा सुपर्णा'[1] 'य आत्मनि तिष्ठन्'[2] 'नित्यो नित्यानां चेतनश्चेतनानाम्'[3] 'अजामेकां'[4] 'जुष्टामापोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इत्यादि श्रुतिभि: ----

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह: ।
अन्यश्च परमो राजंस्तथ्यान्य: पंचविंश: ।।

यथेश्वरश्च जीवश्च सत्यभेदौ परस्पर'मित्यादि स्मृतिभिश्च 'भेदव्यपदेशाद् ,भेदव्यपदेशाच्चान्य:,शारीरश्चोभयेऽपि हि भेदेनैनमधीयते पृथगुपदेशात्' इत्यादिभिर्निर्णायकसूत्रैश्च सिद्धो भेद: । न च श्रुतिरनुवाद:,ज्ञात् सत्यत्वश्रुतेरनुवादकत्वप्रस्तावोक्तन्यायैर्जीवतादविच्छिन्नजीवभेदस्याप्राप्तया न हिंस्यादिवचननुवादकत्वोपपत्ते: ।शाखान्तरस्थ विधिवाक्यस्यैव पुंविशेषं प्रत्यर्थवत्त्वाच्च ।"द्यौ:प्रणयन्ती" त्यादिवद्वर्तमानमात्र । ग्राहिप्रत्यक्षाप्राप्तकालत्रयाबाध्य भेद प्रापकत्वोपपत्तेश्च । ऐरपि षाड्विधतात्पर्यलिंगवद्वाढ्यार्थत्वाच्च । 'षाड्विंशतिरित्येव याज्ञिति कर प्रति प्रसार्थत्वाच्च । प्रत्यक्षस्याप्रमाण्ये श्रुतेरनुवादकत्वायोगाच्च । श्रुते: प्रत्यक्षानिरपेक्षानुवादत्वेन धारावाहिकद्वितीयादि ज्ञानवत् प्रकाशत्वोपपत्तेश्च । विद्धावाक्यवत् सप्रयोजनानुवादकत्वेन स्वार्थपरत्वात्त्च । यत्तनित्यादिनिषेधार्थानुवादलिंगाभावेन विषयान्तरश्रवणेन च निषेधार्थात्

---

१- श्वेता० ४।६ ।।

२- शत०ब्रा० १४-५।५।३० ।।

३- कठो० ५।१२ ।।

४- श्वेता० ४।५ ।।

नुवादायोगात् । विधानार्थानुवादे चानुवादास्य तात्त्विकत्वनियमाच्च ।
अनुवादकत्वेऽपि यथार्थरूप्यप्रामाण्यहानेश्च ।

किं चौपनिषदस्य ब्रह्मपरोक्षशास्त्रेणाप्राप्तेः तद्धर्मिकस्य तत्प्रति-
योगिकस्य वा भेदस्य कथं शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तिः ? न च शास्त्र-
सापेक्षप्राप्तया शास्त्रस्यानुवादकता, भेदमात्रस्य प्राप्तअनुवादत्वे तु घटेन घटैक्य-
श्रुतिरप्यनुवादः स्यात् ।

भेदश्रुतेर्व्यावहारिकभेदपरत्वविचारः

न चानुवादकत्वेऽपि बाध्यव्यावहारिकभेदपरा श्रुतिः ,अप्रामा-
ण्यापातात् । न चाभेदश्रुतिविरोधादिष्टम्, तस्या लक्षण्या अखण्डचिन्मात्र-
परत्वेन भेदाविरोधत्वात्, वैपरीत्यस्यापि सुवचत्वात् ।यदि तु भेदश्रुतिः प्रत्य-
क्षप्राप्तार्थत्वाद् दुर्बला, तर्ह्यैक्यश्रुतिरपि तद्विरुद्धत्वाद्बाधा स्यात्, मानान्तर-
प्राप्तिवत् तद्विरोधस्यापि दौर्बल्यहेतुत्वात् ।यदि चैक्यश्रुतिः प्रत्यक्षाविरुद्ध-
क्यपरा, तर्हि भेदश्रुतिरपि तदसिद्धत्रिकालाबाध्यभेदपरा अस्तु । न च षाड्विध-
तात्पर्यलिङ्गवत्वादैक्यश्रुतिः प्रबला, लिङ्गानां तात्पर्यमात्र ज्ञापकत्वेनार्थतथा-
त्वाज्ञापकत्वात् । स्वीकृतं च भेदश्रुतेरनुवादकत्वं त्यजता त्वयापि भेदपरत्वम् ।
अस्ति चात्रापि अदितिः अनश्वत् ,पूर्णं परो जोषंघोद्भूपूण , इत्याद्युपपत्तिरूपं,
सत्यंभिदा सत्यं भिदेत्यादावभ्यासरूपं च तात्पर्यलिङ्गम् । तद्धुक्तं च त्वत्प-
दो प्रमाणसंप्लववद् व्यर्थमित्युक्तम् । वक्ष्यते च भेदश्रुतेरपि षाड्विधलिङ्गवत्ता।
निषेध वाक्यत्वाद् ऐक्यश्रुतिः प्रबलेति तु निरस्तम् । किं च भेद एवैक्यनिषेध
रूपः । किं च भेदश्रुतिरेव प्रबला, अनुपसंजातविरोधित्वात्, प्रत्यक्षादिसंवादात् ,

निरवकाशत्वाच्च । उक्तं हि ---

स्वातंत्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैक्यवाक्यमत्यक्तावकाशा यथेष्टत।।इति।।

किं चायं भेदो व्यावहारिक:,मुक्तावपि भेदस्य स्मृतौ श्रुतेश्च ।
न च साम मुक्तिदवाधरा ,

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।

इत्यादिस्मृतौ साधिभावोक्तेः ।

न यत्र माया किमुतापरे तैरनुव्रता यत्र सुरासुरार्चिता ।
श्यामायदाता: शतपत्रलोचनाऽपिंशगव (स्त्र सुच:सु) स्त्राभरणा: सुपेशस: । इति स्मृतौ माया निषेधाच्च ।

यो वेद निहितं गुहायांपरमे व्योमन् ।
सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता ।।

इत्यत्र शुद्ध ज्ञानफलत्वोक्तेश्च ।त्वयापि शुद्धब्रह्मविषयत्वेन स्वीकृताया भूमविद्याया: फलोक्त्यवसरे तस्य सर्वेषु लोकेकामचारो भवति, स एकधा भवति त्रिधा भवति पंचधा भवति सप्तधे ति भेदोक्तेश्च ।'परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्यादौ ।

स्वरूपाभिव्यक्त्युक्तेश्च ।' तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति' त्यत्र कर्मदायोक्तेश्च ।' जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती' त्यादौ भेदज्ञानान्मोक्षोक्तेश्च । त्वन्मतेऽपि भेदभोगादिपरेषु फलाध्यायान्त्यपादस्थेषु' जगद्व्यापारवर्ज,संकल्पादेव च तच्छ्रुतेः ,भोगमात्रसाम्यलिंगाच्चेत्यादिसूत्रेषु प्रक्रान्तशुद्धब्रह्मविद्याफलस्यैव वक्तव्यत्वाच्च ।

## जीवेशभेदशब्दान्तरादि विचारः

पूर्वमीमांसायाः द्वितीयाध्याये कर्मभेदक प्रतिपादकानि षट् प्रमाणानि उक्तानि तथाहि (१) शब्दान्तरः (२) अभ्यासः (३) संख्या (४) संज्ञा (५) गुण (६) प्रकरणान्तर । एभिप्रमाणैः जीवेश्वरयोर्भेदोऽपि सिध्यति । (१) एषा सर्वं जीवं प्रबोधयति एतस्मात् जीवः उत्तिष्ठति विरुद्धार्थक धातुनिष्पन्नं आख्यातकर्म शब्दान्तरमस्ति । (२) 'नित्यः परो नित्यः जीवः'[1] इत्थं प्रकारेण अविशेषाः पुनः श्रवणरूपः अभ्यासः । (३) अशब्दम् 'अनश्नन्'[2] इत्यादि गुणान्तर उपदेशके विधते येन जीवब्रह्मस्योर्भेदः आयाति। 'यतो वाचो निवर्तन्ते'[3] इत्यादि वाक्यैः प्रकरणान्तरस्य उपस्थिति भवति । 'जीवेशौ'[4] इत्यादिस्थाने नामधेयस्य भेदेनापि भेदस्य वर्णनं वर्तते इति ।

---

१- कठो० ३।१५ ॥

२- मु० ३।१।१ ॥

३- तै०उ० २।४।१ ॥

४- नृ०उ०ता० -९ ॥

## भेदश्रुते: षड्विधतात्पर्यलिङ्गविचार:

तात्पर्यग्राहक षड्विधलिङ्गप्रक्ताभि: श्रुतिभि: अवगम्यमानस्य भेदस्य कथमतात्त्विकत्वं वक्तुं शक्यते ? अथर्ववेदीयमुण्डकोपनिषादि द्वा सुवार्म[1] इत्येवं उपक्रम: ।एवं परमं[2] साम्यमुपैति अयं उपसंहार: ।"तयोरन्य:[3]अनश्नन् अनश्नन् अन्य" तथा"अन्यमीशम्[4]" अयं हि अभ्यास: ।शास्त्रैकसमधिगम्य ईश्वर-प्रतियोगिक त्रिकालावाध्यभेद: शास्त्रं विनानाधिगम्यते इयमेव अस्य भेदस्य अपूर्वता (इतरप्रमाणानधिगतिरस्ति)[6]। एवमेव पुण्यपापे विधूय[5]" । इयं हि फलश्रुति : ।"अस्य महिमानम्" अयं हि स्तावक: अर्थवाद:,एवं बपत्ति अन-म्नन् अन्योर्द्वयो:प्रदर्शनमेव जीवश्वरभावं भेदस्य उपपत्ति: । अत्र"मायामा-त्रमिदं द्वैतम्" इत्यादि वाक्येषु यथा द्वि शब्द: भेदस्य वाचक: अथवा भेदस्य स्वादोपक: अथवा द्वित्व संख्येव अभेदस्य विरोधिनीरस्ति । तथैव उपक्रमस्थ द्वित्वं अथवा भेदविषायक: निश्चित: अस्ति एव प्रकारेण उपसंहारे यत् परमं साम्यं अथवा सादृयस्य प्रतिपादनमस्ति , सोऽपि भेदविषायक: एव । यत: "तद्भिन्नत्वे सति तद्गतबहुधर्मयोगित्वमेव सादृश्यमुच्यते ,नहि केवलं तद्धर्मयो-गित्वम् । सादृश्यमैक्यं ऐतद्वयं परस्पर विरोधिधर्मो विधते।अत्र च एकस्य विधाने सति अपरस्य स्वत: निषोधो भाति, यथा नायंस:,किन्तु तत्सदृश: ।नायं तत्सदृश: किन्तु स एवायम् ।"गगनं गगनाकारम्" एतत् यदभिन्नेऽपि वस्तुनि सादृश्यं व्यवहृयते ,तस्य तात्पर्यं तु गगनसदृश वस्त्वन्तरताया: निषोधमात्रे अथवा गगनैकदेशस्य तस्यअनेकदेशेन सह सादृश्यस्य प्रतिपादनं कृतम् विधते । सर्वथा परमं साम्यमुपैति अयं उपसंहार: सर्वथा भेदविषायक: एव सिद्ध्यति । अभ्यासस्य

---

१- मुण्ड ३।१।१ ।।

२- मुण्ड ३।१।३ ।।

३- मुण्ड ३।१।३ ।।

४- मु० ३।१।३ ।।

५- मु० ३।१।२ ।।

६-

६-मु० ३।१।२ ।।

७-गौड़का ० १।१७ ।।

अविशेषपुन: श्रुति: अस्मिन्लदापै ऽपि अर्थत: अविशेणता अथवा एकप्रकारता एवलभ्यते न शब्दत:,अन्यथा सास्नादि विशिष्ट व्यक्तिमिप्रायेण उच्चरितेन गौ शब्दैन सह पृथिव्या:एवं वाच: अभिप्रायेण प्रयुक्त: यत्र गौ:गौ:शब्द:तत्र गौर्गौ: इत्यादि स्थले अभ्यास: स्वीकरणीयो भविष्यति ,अत: न शब्देषु किमपि अन्तरम् ।फलत: अभ्यासोऽपि भैद विषायक: एव ।"अन्यमीशतम्"यत्र समभिव्याहृतपश्यति पदैन उपस्थापित: जीव: एव ईशगत अन्यत्वस्य प्रतियोगी, तथैव भवति यथा"सप्तमं पदं वृह्णाति" एतद्विधिवाक्यस्य पदस्य तत्समभिव्याहृत"एकहायन्या[1] सोमं क्रीणाति अनेन वाक्येन उपस्थापित: गौरैव प्रतियोगी भवति फलत: अभ्यासोऽपि भैदविषायक: एव इति ।

भैदपरताया:निणायिकं षाड्विधलिङ्गोपेतं अन्तर्यामिब्राह्मणं (वृह ० उ० ३।८) भैदवादे एकं नितान्तं प्रवलं प्रमाणमस्ति ।तत्र च षाड्विधलिङ्गानां स्थिति: इत्थं"भैत्थ नु त्वं काप्य तमन्तर्यामिणम् ?[2]" अयं तावदुपक्रम:"एष त आत्मान्तर्यामी[3]" अयं मन्त्र भाग एकविंशतिवारं पठिताभ्या स:। ब्रह्मवत् अन्यामि अपि सर्वथा उपनिषद् प्रमाणैनैव अधिगतोऽस्ति इतर प्रमाणै: बोधिता नास्ति,एतदेव अस्य अपूर्वत्वम् ।" स वै ब्रह्मवित्[4]" इयं हि फलश्रुति: तच्चैत् त्वं याज्ञवल्क्य । सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवी: उदजसे (ब्रह्मविदे उपहृता गा:नयसि) मूर्धा ते तिष्यति[5]" इयं हि सूत्रात्मन: अज्ञानस्य निन्दा-

---

१- जैसू० ४।१।२५ ॥

२- वृह०उ० ३।७।१ ॥

३- वृह०उ० ३।७।३ ॥

४- वृह०उ० ३।७।१ ॥

५- वृह०उ० ३।७।३ ॥

तज्ज्ञानस्य प्रशंसा (अर्थवादोऽस्ति)। "एवंयस्यपृथिवीशरीरं यं पृथिवीन वेद"[1] इयं हि उपपत्ति अस्याः श्रुतेः भेदपरत्वम् । "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते"[2] अस्य सूत्रस्य भाष्ये स्वीकृतं वर्तते । "शारीरश्च नान्तर्यामीष्यते" इति भाष्यम् । एभिः सर्वैरपि प्रमाणैःसर्वेषां वेदान्तानां सर्वथा भेद एव तात्पर्यमवसीयते । एवं वादावली ग्रन्थेऽपि श्रीमद्भिः जयतीर्थैः भेद सत्यत्वं विस्तरेण प्रतिपादितं तदिहसमुपस्थाप्यते ।

भेदसत्यत्वप्रतिपादनम् :---

ननु कथं भेदसत्यता युक्तिमती? "विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते ,आत्मत्वात्,परमात्मवत्" इत्यनुमानेन विरोधादिति चेन्न ,आत्मत्वस्य प्रागेव निरस्तत्वात् ।अस्तु तर्हि ---

विमतं तात्त्विकस्वात्तभेदहीनं मतत्वतः
यदित्थं तत्तथा मद्वत्स्वं तथेदं ततस्तथा ॥

इत्यनुमानविरोध इति चेन्न ,विचारागोचरत्वात् । तथाहि-किमत्र स्वान्तर्भेदहीनताशब्देन प्रत्येकं पदार्थानां स्वागतभेदराहित्यमुच्यते ?उत भेदाधिकरणत्वविरहः ? नाद्यः ,सिद्धसाधनत्वात्। नोत्तरः,साध्यविकलत्वाद् दृष्टान्तस्य । यथाकाशस्वगतनेभेदो नस्ति तथा जगदाख्ये पदार्थसमुदायेऽपि न तादृशभेद इति चेत् -अत्रापि कोऽर्थः ? यथाकाशस्याप्याकाशप्रतियोगिको भेदो नास्ति तथा जगतोऽपितत्प्रतियोगिको भेदो नेत्यर्थाभ्युपगमे सिद्धसाधनम्।

---

१- बृह०उ० ३।७।३ ॥

२- ब्रसू० १।२।२० ॥

अथ यथा घटाकाशमाकाशयोर्नि भेदः, तथा जादंशयोरपीति चेन्न, साध्य विकलत्वाद्दृष्टान्तस्य । व्योम्नोऽपि संयोगित्वेन सावयवत्वसाधनादित्यलम् ।

भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्यनुमानम् स्विति चेन्न, साध्यानिरुक्तेः । दृष्टान्ते साधनविकलत्वश्च तत्र तद्भेदासत्त्वेन भेदत्वस्यैवाभावात् । परमार्थतस्तदभावेऽपि कथञ्चिदस्ति भेदः, अतो भेदत्वमपीति चेन्न, तादृशस्य भेदत्वस्य पक्षेऽनन्वयात् । अप्रथैव बाधितत्वादिविशेषणं भेदत्वसामान्यस्यैव हेतुतेति चेन्न । धूमवाष्पयोर्धूमत्वकत्सामान्यस्याप्यभावात् । अन्यथानवधारितबाधितत्वाबाधितत्वादिविशेषण धूमत्वमात्रेण हृदादेरपि सदहनतापातात् । अप्रमाणगम्यत्वमुपाधिश्च । भेदत्वादेव तदपि स्यादिति चेन्न, प्रातिभासिकत्वस्याप्यापातात् । अथात्र व्यवहारनिर्वाहकताप्रतीयते इति चेत् तर्ह्यत्र प्रत्यक्षादिप्रमाणसिद्धतां च किन्न पश्यसि ? ननु कथं प्रत्यक्षस्य भेदग्राहकत्वम् ? तत्किं भेदमेवगोचरयदुत वस्त्वपि ? नाद्यः, धर्मिप्रतियोगिप्रतीतिमन्तरेण भेदप्रतिपत्तेरयोगात् । द्वितीये किं भेदपूर्वं वस्तु वस्तुपूर्वं वा भेदं युगपद्वोभयं गोचरयेत्? नाद्यः, दत्तोत्तरत्वात् । न द्वितीयः, बुद्धेर्विरम्यव्यापारायोगात् । नापि तृतीयः, कार्यकारणबुद्ध्योर्योगपद्यायोगात् । तद्भेदस्य भेदान्तरभेदेऽनवस्थानम् । अनन्तभेदाभ्युपगमेऽपि मूलक्षतेरभावान्नानवस्थादोष इति चेन्न । अयमितोभिन्न इति वानयोर्भेद इति वा ? नाद्यः, विशिष्टत्वेनैव प्रतीतिनियमात् । न द्वितीयः, भेदे नैव विज्ञातस्य विशेषणत्वात् । ततश्च पूर्वपूर्वभेदप्रतीतिमन्तरेणोत्तरभेदाप्रतीतेरनन्तत्वाद्युगपत्प्रतीतेरयोगात् मूलक्षतेरनवस्था सुस्थैवेति । विद्यमानस्य भेदस्य स्वरूपेणगृहीतस्य विशेषणतोपपत्तौ किं भेदाप्रतीतिः करिष्यतीति चेन्न । दूरस्थवनस्पत्योः क्षितिनीरयोर्वास्वरूपतो विद्यमानभेदयोरपि स्फुरतोः

संयुक्तत्वादिप्रतीत्यदर्शनात् ।तत्र समानाभिधातदोषाद्प्रतीतिरिति चेन्न, विद्यमानभेदयोः स्वरूपेण स्फुरतोर्विशेषणविशेष्य भावग्रहणस्थलस्य सम्प्रतिपन्नस्याभावात् । किं च धर्मिणोभिन्नत्वेन प्रतीतस्य प्रतियोगिता? अप्रतीतस्य वा ? नाद्यः ,परस्पराश्रयतापातात्,स्तम्भात्कुम्भभेदसिद्धौ कुम्भात् स्तम्भभेदसिद्धिरिति । न द्वितीयः आत्मनोऽपि प्रतियोगितापातात् ।

ननु निर्विकल्पकसंविदि भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासे पुनः सविकल्पक धिया तद्विशेषणविशेष्यभावग्रहणोपपत्तेः क्वमितरेतराश्रय इति चेन्न । निष्प्रतियोगिकभेदग्रहणस्यैवायोगात् । सर्वेप्त प्रतियोगिघटित एव तस्मिन्प्रमाणप्रसयत् ।

किं च किमयं भेदो भिन्नमेव धर्मिणं परिरमते ? उताभिन्नम् ? नाद्यः अनन्तभेदाभ्युपगमप्रसङ्गात् । सन्त्वनन्तभेदाः ,किं नश्छिन्नमिति चेत्र तेऽनन्ताः किं क्रमेण भेदा धर्मिणं परिरमन्ते ? युगपद्वा ? नाद्यः,क्रमेण परिरममाणानन्तभेदसम्बन्धाय धर्मिणोऽनादिनित्यतापातत् ,प्रतिदापर्यैके कभेदसम्बन्धेऽप्यनन्तक्षणवृत्तित्वस्य दुष्परिहरत्वात् । न द्वितीयः,भिन्ने भेदस्थितिरिति पदादातैः भेदसम्बन्धं विना भिन्नत्ववाचोयुक्त्ययुक्तत्वात् । तत्सम्बन्धेनैव च भिन्नत्वे केन भेदेन विशिष्टे कस्यभेदस्य स्थितिरिति नियामकाभावादोषां कलहान्नैकोऽपि भेदो निविशेत् । तथापि चेच्छ्रबाप्वडोऽनन्तभेदानभ्युपैति, तदाभ्युपैतु यदि भेदपरम्परा संविदमध्यारोहेत् । न द्वितीयः,विरोधादेव,सर्वत्राप्यतिप्रसङ्गाच्च । धर्मिणं परिरभ्यैव भेदो जायते,अतो नोक्तदोष इति चेत् मैवम्,धर्मिणा सहैव धर्मोत्पत्तेरनभ्युपगमात् ।अभ्युपगमे चोत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति कल्पनावैयर्थ्यात्,गुणानां द्रव्यजन्यत्वे धर्माणामपि तथात्वात्।

तस्मान्न भेदे प्रत्यक्षं प्रमाणम् । यदा तु भेदे न प्रत्यक्षं प्रमाणं तदा का वार्ता तदुपादोपजीविनो वराकस्यानुमानस्याप्रमाणतायाम् ।आत्मभेदस्तु न प्रमाणगन्धमनुभवति । न तावत्तत्र प्रत्यक्षं प्रमाणम् परमात्मनोऽप्रत्यक्षत्वात्, प्रत्यक्षाप्रत्यक्षभेदस्य वायुवनस्पतिसंयोगवदप्रत्यक्षत्वात् । आत्मा आत्मप्रतियोगिक भेदवान्,आत्मत्वादित्याद्यनुमानस्य दृष्टान्तालाभदुष्टत्वात् ।विप्रतिपन्नानि शरीराणि स्वसंख्यासंख्येयात्मवन्ति, शरीरत्वादित्यस्यातीतानागतशरीरेषु व्यभिचारः ।वर्तमानशरीरत्वहेतोर्योगिशरीरे व्यभिचार । व्यवस्थानुपपत्तिश्च दुर्निरूपत्वेन भेदासाधकत्वम् । तथाहि -किं व्यवस्थापदेन धर्मभेदो विवक्षितः ? भिन्नाधिकरणधर्मभेदो वा ? विरुद्धत्वं वा ? नाद्यः ।धर्मिभेदाभावेऽपि धर्मभेदोपपत्तेः ।न द्वितीयः परस्पराश्रयत्वात् । न तृतीयः "नाजात् एकोऽन्यं हन्ति, नाप्यन्यमन्याधारः" इति न्यायेन सहावस्थानापेक्षणात् । तस्मान्न महात्मनां भेदसिद्धिरिति ।

अत्र प्रष्टव्यम् -" किं भेदस्य प्रतीतिरेव निराक्रियते ? उत तस्याः कारणजन्यता ? निर्दोषकारणजन्यता वा ? नाद्यः,भेदस्य प्रतीतिमनुपजीव्य निराकर्तुमशक्यत्वात् ।न द्वितीयः,तत्किमजन्यतया स्यात्,अकारण जन्यतया अतत्कारणजन्यतया वा ? नाद्य अनभ्युपगमात्,भेदप्रतीतेर्नित्यतापत्तेःस्वप्रातिककृत्याचरणप्रसङ्गाच्च । न द्वितीयः,व्याघातात्,तन्निवृत्तेरप्यकारणत्वापत्त्याप्रयत्नायोगाच्च । नापि तृतीयः,तदुत्पादकस्यैवतत्कारणतया व्यवहारात् । न ह्यनुत्पादकादुत्पद्यते इति सम्भवति, नाप्यन्योत्पादकात् । तृतीयेऽपि किं तर्केणैव सदोषत्वाध्यवसायः ? अथ स्फुटतरबाधकवशात् ?नाद्यः वेदान्तवाक्यवृत्तेरप्यविश्वसनीयतापातात् ।दोषश्चात्राविद्यैव परस्येष्टा ।सा

च यदि वेदान्तानामपि मूलं तर्हि प्रत्यक्षो प्रद्वेषः किंनिबन्धनः । न द्वितीयः, निरवकाशस्य तस्यानुपलम्भात् । कल्प्यमानमपि बाधकं किं भेदमेव गोचरयेत् ? उताभेदतम् ? यद्वा यत्किञ्चित् निरालम्बनस्यानुदयात् । नाद्यः साधकत्वात् । द्वितीयेऽपि तदन्यः तद्विरोधी तदभावो वा नञर्थो वाच्यः । पक्षत्रयेऽपि दुष्परिहरो भेदः । भेदाभावग्राहिणापि प्रतियोगिविलक्षणतया स्वविषयो व्यवस्थाप्यः । नापि तृतीयः अविरोधादेव बाधकत्वायोगात् ।

किंच नायं भेद इति वा, नास्त्यत्र भेद इति वा, अन्यदेव भेदात्मना प्रत्यभादिति वा, बाधकज्ञानेन भवितव्यम्, नेदं रजतं इत्यादिवत् । तदेतत्सर्वथा भेदावगाहीति कथं तत्परियन्थिभावमाकलयेत् । तस्मात्कॢप्तविषयत्वान्नानवस्थादेरुत्थानम् । उत्थितस्य वा भवेदाभासत्वम् । पारमार्थिक भेदानभ्युपगमेऽपि व्यावहारिकाङ्गीकारेण विकल्पानिराकरणोपपत्तिरिति चेन्न, स किं प्रत्यक्षाद्याकलितो वा अन्यो वा यो निराक्रियते । आद्ये कथमङ्गीकृतस्य निराकरणम् ? अन्यश्चान्निषिध्यताम्, न नो हानिः । न च प्रातिभासिक एवायं भेदः, अपसिद्धान्तापातात् । नापि परप्रसिद्ध्या परबोधनम्, परस्य स्वक्रियास्वन्यायविरुद्धविकल्पसाधुत्वाप्रसिद्ध्या बोधयितुमशक्यत्वात् । कथं चात्रापादनक्रमः ? यदि भेददर्शन स्यात्, तदा अन्योन्याश्रयादिकं स्यात्, यदि भेददर्शनं वास्तवं स्यात्, तदा अन्योन्याश्रयादिकं स्यादिति वा ? यदि भेददर्शनं धर्म्यादिसापेक्षं स्यात्तर्हीति वा ? नाद्यः, यदि भेददर्शनं न स्यात्तर्हि सकलव्यवहारविधुरः परः प्रसज्येतेति प्रतितर्कपराहतत्वात् । न द्वितीयः, व्याप्त्यवैकल्यात् तृतीयेऽपि सापेक्षतामात्रं निवर्तताम्, दर्शनस्य किमायातम् ? प्रकारान्तरेण निर्वाहकल्पनस्य शक्यत्वेन प्रतीतेरपह्नवायोगात् । अन्यथा स्वाभिलषित-

स्याप्यभेदस्यासिद्धेरुक्तत्वात् । इयन्चात्र दर्शनस्थिति: न भेदो युगधर्म:, किन्त्वेकस्य धर्मान्तरेण निरूप्य: इमौ भिन्नावित्यत्रापि स्तम्भात्कुम्भस्यभेद:, कुम्भात्स्तम्भस्य भेद इत्येवार्थ: । अनयोर्भेद इति तूभयधार्मिकं भेदद्वयमेव । एकवचन तु अनयो: स्वरूपम् इतिवत्। स च भेदो धर्मिणस्स्वरूपमेव ।अन्यथा स्वरूपं प्रतीयमान सर्वात्मनाप्रतीयेत ।तथा चात्मन्यपि घटोऽहमिति प्रतीतिप्रसङ्ग । न हिदृष्टपदार्थस्य पुरुषस्य वस्त्वन्तरात्तस्य भेदे संशय: क्वचिद्दृष्ट: । न च सर्वतो व्यावृत्त्यनुभवे सार्वज्ञ्यापत्तिदोष:,सामान्यत: सर्वस्य सादिसिद्धत्वाङ्गीकाराच्च । अन्यथा सार्वाधिकव्याप्तिपरिज्ञानासम्भवेन सर्वानुमानतकोंच्छेदप्रसङ्ग । न च विशेषज्ञानापेक्षा,भेदस्वरूपमात्रप्रतीतेस्तदनपेक्षणात् । न च संशयाभावप्रसङ्ग: , कुतश्चिद्व्यावृत्तस्य वस्तुन: प्रतीतावपि व्यावृत्तिविशेषाग्रहणवशादेव संशयोत्पत्ते: ।अन्यथा सर्वकोट्यवलम्बीसंशय:स्यात्।

भेदोज्जीवनग्रन्थेऽपि अद्वैतसम्मत् भेदनिरासयुक्तय: प्रदर्श्य निराकृता: सन्ति । भेदे सत्यत्वे प्रमाणानि युक्तय:श्च प्रदर्शितानि सन्ति ।तत्रत्य पूर्वपक्षादनन्तरोग्रन्थो मया अत्र उपस्थाप्यते - अत्रायं परिहार: यत्तावदुक्तं प्रत्यक्षं न जीवेश्वराभेदे प्रमाणमिति तत्र ब्रूम: । ईश्वरधर्मिकोजीवप्रतियोगिकोभेदईश्वरस्यप्रत्यक्ष: ।(ईश्वरस्य)तस्य तादृश प्रत्यक्षासद्भावे उत्तम:पुरुषास्त्वन्य: इति तद्वचनं प्रमाणं । ईश्वरस्य जीवाध्यक्षीकरणक्षमत्वान्नचोद्यावकाश: । ईश्वरप्रतियोगिकोजीवधर्मिकोभेदोजीवस्यप्रत्यक्ष: ।सप्रतियोगिकपदार्थप्रत्यक्षो न प्रतियोगिप्रत्यक्षं तन्त्रं । इयं गौर्गवयसदृशी इहघटोनास्ति स्तंभ: पिशाचोनेत्यादौ व्यभिचारात् ।एतेनान्योन्याभावप्रत्यक्षायोग्यताया:प्रतियोगिक प्रत्यक्षायोग्यताधीनत्वादयोग्येश्वरप्रतियोगिकान्योन्याभावस्य कथं प्रत्यक्षायोग्यतेतिनिरस्तं । स्तंभ: पिशाचो न भवतीत्यादौव्यभिचारात् ।

अन्योन्याभावविषयत्वात्तस्य । एवं यज्ञदत्तप्रतियोगिको विष्णुमित्रधर्मिको भेदो विष्णुमित्रस्य प्रत्यक्ष इत्याद्यूह्यं । ननु नाहं निर्दुःखो न सर्वज्ञ इति निर्दुःखत्वादिसंसर्गाभाव एवात्मन्यनुभूयते नेश्वरप्रतियोगिकान्योन्याभाव इति चेन्न । मयि निर्दुःखत्वसर्वज्ञत्वादिकं नास्तीत्यनुभव एव तत्संसर्गाभावविषयकः । निर्दुःखत्वस्यैव प्रतियोगितयोपादानात् । न चास्य निर्दुःखत्वात्यंताभावो विषयः । धर्मिप्रतियोगिनोस्तादात्म्यं सामानाधिकरण्येन प्रसज्य तस्यैव निषेधात् । प्रत्यक्षप्रामाण्यं तु सुदृढमन्यत्रोपपादितमस्माभिः । अनुमानानि च ----

जीवः ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं ब्रह्मानुसंहितदुःखानुसंधातृत्वात् व्यतिरेकेण ब्रह्मवत् । ब्रह्म वा जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं जीवानुसंहितदुःखानुसंधातृत्वात् व्यतिरेकेण जीववदिति । अत्र जीवब्रह्मप्रतियोगिकभेदयोः घटसत्तया व्यावहारिक्या समानसत्ताकयोः व्यावहारिक्योः भेदयोः घटे प्रसिद्धत्वान्नाप्रसिद्धविशेषणत्वं जीवब्रह्मणोः दुःखानुसंधातृत्वे तदभावलक्षणमुक्तेरपुरुषार्थत्वप्रसंगात् निरंजनत्वश्रुतिविरोधाच्च तदभावावश्यंभावान्नासिद्धिः । नन्वत्र जीवशब्देनानवच्छिन्नचैतन्यविवक्षायां तस्य दुःखानुसंधातृत्वेनासिद्धिप्रसंगादंतःकरणेन वा ज्ञानेन वावच्छिन्नं चैतन्यं विवक्षणीयं । न च तद्युक्तं । अवच्छिन्नस्य मिथ्यात्वेन तत्सत्तासमानसत्ताकत्वेन सिध्यतो भेदस्य पारमार्थिकत्वासिद्धिरिति चेत्कस्तर्हि तवापि जीवशब्दार्थः । अवच्छिन्नमेवेति चेत्तर्हि जीवस्य मुक्तिर्मिथ्या स्यात् । ननु जीवभाव एव मिथ्या चैतन्यं तु सत्यमेवेति चेदत्र चैतन्ये मिथ्याभूतो जीवभावस्तत्सत्यमेव । तदेव चैतन्यं जीवशब्देनास्माभिर्विवक्षितमिति सन्तोष्टव्यम् । तदेव चैतन्यं दुःखानुसंधात्रिति नासिद्धिः दुःखानुसंधातृत्वं मिथ्यैवेति चेत्किमनेनाकांडताण्डवेन । न ह्यस्माभिस्तत्सत्यत्वं हेतौ विशेषणीकृतम् ।

ननु जीवब्रह्मणोः भेदसिद्धेः पूर्वमर्थं पक्षा दृष्टांतमाव इति चेन्न। त्वया भ्युपगतेनव्यावहारिकभेदेनैवपक्षादृष्टान्तभावोपपत्तेः । यद्वा जीवोब्रह्मप्रतियोगिकतात्त्विकतादात्म्याधिकरणं न भवति ,ब्रह्म वा जीवप्रतियोगिकतात्त्विकतादात्म्याधिकरणं न भवति । पूर्वहेतोत्वरैकसाध्यनिर्देशोद्रष्टव्यः ।न चैषामप्रसिद्धविशेषणत्वं दोषाय । तद्विसाध्य कोटिप्रसिद्धेः साध्यतदभाववत्त्वेन संदेहानुदयात्पक्षताविघटनद्वारापक्षधर्मताविघटकत्वेनदोषः उताप्रसिद्धसाध्येतेन हेतोर्व्याप्तिग्रहणायोगेनव्याप्तिविघटनेन वा उभयविघटनेन वा । नाद्यः ।ब्रह्म जीवप्रतियोगिकतात्त्विकतादात्म्यापन्नं न वेति संशयाभावेऽपि जीवप्रतियोगिक तात्त्विकतादात्म्यं ब्रह्मण्यस्ति न वेति संदेहमात्रेणाभिधेयत्वसाधकानुमान इव पक्षतोपपत्तेः ।न द्वितीयः केवलव्यतिरेकिणिसाध्याभावस्यैवव्याप्तिग्राहत्वात् । अत्र साध्याभावस्यजीवतादात्म्यस्यजीवेप्रसिद्धेः । यत्र व्यतिरेकिणिभावःसाध्यः तत्राभावस्य व्याप्त्युपयोगिनोभावज्ञानाधीनत्वात्साध्याप्रसिद्धदोषाय । प्रकृतेत्व भावस्यसाध्यत्वान्नदोषः । न तृतीयः ।उभयविघटने नादूषणत्वात् ।व्याप्ति पक्षधर्मतान्यतरविघटकत्वेहि दूषणम् । यद्वाब्रह्मप्रतियोगिकाभेदोनजीवधर्मिकः ब्रह्मधर्मिको वाऽभेदो न जीवप्रतियोगिकः ।जीवानुसंहितदुःखानुसंधातुरभेदत्वात् । व्यतिरेकेणजीवप्रतियोगिकजीवधर्मिकैक्यवत् ।जीवप्रतियोगिकमैक्यं वानब्रह्मधर्मिकं जीवधर्मिकमैक्यंनब्रह्मप्रतियोगिकं ब्रह्मानुसंहितदुःखानुसंधातुरभेदत्वात् । व्यतिरेकेणब्रह्मधर्मिकब्रह्मप्रतियोगिकैक्यवत् । एवं यज्ञदत्तादिभ्योदेवदत्तादीनां भेदःसाध्यः।

ननु औपाधिक भेदमात्रे पदुःखानुसंधातृत्वोपपत्तेः ।पारमार्थिक भेदसाधनेऽप्रयोजकत्वमितिचेन्नैवं ।औपाधिकभेदेपियोगिनोनानादेहजन्यसुखाद्यनुसंधानस्यैवदर्शनात् ।अत्र देहस्यांतः करणस्योपाधेर्भिन्नत्वात् । न ह्यन्यदेहस्थमंतःकरणमन्यदेहस्थं भवति । तत्राविद्योपाधिरैक्यएवभवतीति चेदिहाप्यैकजीववादिन -

एकस्य । बहुजीववादिनस्तु सुप्तावपिकारणात्मनांतः करणानुवृत्तिं वदतो नाविद्यावच्छेदोजीवभावहेतुः । किं तह्यंतः करणमेव । ततश्चतदेवनियामकं वाच्यं ।तच्चयोगिष्वपिविचत इत्युक्तम् ।

आत्मत्वजातिसिद्धिद्वारा आत्मभेदसाधनम् :---

अपि च पृथिवीत्वं जलत्व तेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्य जातिभिन्नम् ।जातित्वात्प्रमेयत्वात् जलवत् । न च पृथिवीत्वेतरत्वमुपाधिः ।तत्पक्षेतरत्वात् । अनुकूलतर्काणां वक्ष्यमाणात्वाच्च । एवजलत्वतेजस्त्ववायुत्वमनस्त्वपक्षीकारेणानुमानचतुष्टयमूहनीयम् ।द्रव्यत्वं पृथिवीत्वजलत्वतेजस्त्ववायुत्वमनस्त्वेतरजातिं प्रतिसाक्षाद्व्यापकं सत्साक्षाद्व्याप्य जातित्वात् गुणत्ववत् । सर्वाणिमनांसि स्पर्शानधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमद्व्यतिरिक्तानि द्रव्यत्वात् सत्ताधिकरणत्वात् प्रमेयत्वाद्वा पृथिवीवत् । दिग्मेवादिनां तु सर्वत्रदिक्त्वानधिकरणत्वग्रहणंकार्यम् । सर्वापृथिवी जलत्वतेजस्त्ववायुत्वमनस्त्वाद्यनधिकरणद्रव्यत्वव्याप्यजातिमद्व्यतिरिक्ता द्रव्यत्वात् सत्ताधिकरणत्वात् जलवत् । सत्ता द्रव्यत्वान्यात्मनिष्ठजात्यन्याजातित्वात् प्रमेयत्वात् घटत्ववत् । द्रव्यत्वं वा आत्मनिष्ठसत्तान्यजात्यन्यतरत् जातित्वात् घटत्ववत् । आत्माणुत्ववादिनां तु आत्मा द्रव्यत्वव्याप्य जात्यधिकरणं अविभुद्रव्यत्वात् पृथिवीवदित्याद्यनुमानान्यात्मभेदं साधयन्ति । न च द्रव्यत्वव्याप्यजातिमत्पदार्थांतरसिद्ध्यार्थांतरत्वं । क्लृप्तेधर्मिणि धर्मविशेषसाधनमात्रेऽनुमानपर्यवसान संभवे तद्विशिष्टधर्मिण्यनुमानपर्यवसानेगौरवात् । नचात्मनोद्रव्यत्वासिद्ध्यासिद्ध्यादिः ।

आत्मनि निर्गुणे रूपादिगुणाभावेऽप्ययावद्द्रव्यभाविनां द्वित्वादिगुणानां व्यावहारिकाणामंगीकारे बाधकाभावात् । गुणाद्यंतभावप्रसंगाच्च द्रव्यत्वसिद्धिः । न चानुकूलतर्काभावादप्रयोजकत्वाभासमानयोगिदोषत्वे ।आत्मपदप्रवृत्तिनिमित्तस्य जातित्वांगीकारे लाघवं ।औपाधिकत्वे तु(औपाधिकधर्मत्वांगीकारे तु)तस्योपाधिज्ञानापेक्षत्वेन गौरवमित्यनुकूलतर्कस्योपस्थितत्वात् । तुल्यव्यक्तित्वादीनां च बाधकानामभावात् । व्यक्त्यभेदोऽपि न बाधकः ।तथाहि आत्मत्वजातिभेदसाधनद्वारा आत्मभेदः साध्यः । स च सन्दिग्धः ।न च साध्याभावसंदेहेऽनुमानं निरुपाधि । अन्ययानुमानमात्रोच्छेदप्रसंगात् । एवं तर्हि गगनत्वादिकमपि जातिः स्यादिति चेन्न ।तेषां धर्मिग्राहकमानेन लाघवानुगृहीतेनैकत्वसिद्धेः । नचैवं प्रकृते धर्मिग्राहकप्रत्यक्षस्य भेदग्राहकत्वेनोपपादनात् । नचापारमार्थिकभेदेनाप्युपपत्त्याऽर्थान्तरत्वं ।जातेर्धर्मिमिथःसमानसत्ताकभेदवद्व्यक्त्याश्रयत्वात् । अन्यथा गगनत्वस्यापि जातित्वापत्तेः ।नन्वेतावतात्मत्वजातिमात्रं सिध्यति नात्मभेदः ।

न च तथात्वेऽव्यक्त्यभेदो बाधकः स्यात् । सत्यनुगतव्यवहाराभावेनानुगतव्यवहाररूपजातिविषयकप्रमाणविघटनेन दूषणं । नचात्मत्वजातावनुगतव्यवहारः । येन तद्विघटनेन जातिरेव न सिध्येदिति व्यक्त्यभेदो दूषणं स्यात् । किन्तु त्वदुक्तानुमानान्येव ।ततः कथं भेदसिद्धिरिति चेत् सत्यं ।नात्र व्यक्त्यभेदो जातेः प्रमाणविघटनेन दूषणम् । येनैवमुपलभेमहि । किं तर्हि लक्षणविघटनद्वारा । नित्यमेकमनेकानुगतमिति हि तल्लक्षणं । एवं च आत्मा धर्मिसत्तासमानसत्ताकात्मप्रतियोगिकभेदाधिकरणम् ।द्रव्यत्वाद्घटवदित्यादीन्यपि(सुस्थानि) । दीन्यन्यथासिद्धानि । चैत्रशरीरं वस्तुतो मैत्र

शरीरस्वामिभिन्नस्वामिकं तद्विरुद्धचेष्टाकशरीरत्वादित्यत्र मैत्रशरीरं व्यतिरेक दृष्टान्तः । जीवेशौ धर्मिस्वसमानसत्ताकभेदवन्तौ विरुद्धधर्माधिकरणत्वात् संमतवत् । विरोधश्च न सहानवस्थानलक्षणः । ऐक्यवादिनोसिद्धेः किं तर्हि नित्यत्वानित्यत्वादाविव वध्यघातुकभावलक्षणः । तादृशश्च धर्मः सर्वज्ञत्वा-सर्वज्ञत्वादिः । न चौपाधिभेदमात्रेण तद्व्यवस्थोपपत्तिः योगिनि भेददर्शनात् । एवं देवदत्तान्तःकरणं यज्ञदत्तान्तःकरणावच्छिन्नचैतन्याद्वस्तुतोभिन्नचैतन्यावच्छेदकं तद्वृत्त्यनिवर्त्यनिवर्तकत्वात् व्यतिरेकेण यज्ञदत्तान्तःकरणवत् । एवं देवदत्तस्य स्मरणं वस्तुतो न यज्ञदत्तीयं यज्ञदत्तानुभवाजन्यत्वात् व्यतिरेकेण यज्ञदत्तस्मरणवदित्यादीनि भेदसाधकान्यूहनीयानि । न चासिद्धिः । देवदत्तानुभूते यज्ञदत्तस्य-स्मरणानुदयात् । आत्मनां च स्वाभाविकाभेदे पारमार्थिकसुखदुःखादिव्यवस्थानुपपत्तिर्बाधिका इति ।

:o:-----:o:

# पञ्चमोऽध्याय:

## ब्रह्मस्वरूपविमर्श:

अद्वैतमतोपस्थापनम् :---

अद्वैतिनां मते ब्रह्मसर्वथा निर्गुण निराकारं निर्विकारं शुद्धं सजातीय विजातीय स्वगत भेद शून्यं सत्यं ज्ञानमनन्तं ब्रह्म इत्यादि स्वरूपलक्षणोपलक्षितम् ।ब्रह्मण: तटस्थ लक्षणं तु जन्माद्यस्य यत: यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म। लक्षणस्य लक्षणं तु असाधारण धर्म: । लक्षणस्य असाधारणत्वं तु लक्ष्यतावच्छेदक समनियतत्वम् । समनियतत्वञ्च व्याप्यत्वेसति व्यापकत्वम् । एवं विध ब्रह्मणि नामरूपात्मकं सर्वं जगत् कल्पितम् । एवं येऽपि धर्मा: ब्रह्मणि श्रुति स्मृत्यादिना प्रतीयंते तेऽपि सर्वे काल्पनिका एव । यथोक्तं सुरेश्वराचार्यै:--

'आनन्दो विषयानुभवो नित्यत्व चेति सन्ति धर्मा: इति

एते सर्वेऽपि धर्मा: ब्रह्मणि संसार दशायां अज्ञानेन रूक्ष सम्मि समन्विता: कल्पिता: तथा चोक्तं चित्सुखाचार्यै: तत्त्वप्रदीपिकायाम् ---

'अक्षामा भवत: केयं साधकत्वप्रकल्पने ।<br>
किं न पश्यसि संसारं तत्रैवाज्ञान कल्पितम् [1] ।।इति ।।

---

१- तत्त्वप्रदीपिकायाम् ।।

एवं वृहन्तोऽस्यधर्माः" सत्य कामः सत्यसंकल्पः इत्यादयो येऽपि धर्माः श्रुतिषु प्रतिपादिताः दृश्यन्ते,तेऽपि-सर्वेऽपि कल्पिताएव । न हि आसां श्रुतीनां ब्रह्मणि सगुणतायाः प्रतिपादने तात्पर्यं किन्तु सगुण प्रकरणे पठितानां श्रुतीनां उपासनाविधिविषयीभूत विशेषणानां बोधमात्रे एव तात्पर्यविरामात् ।नहि वस्तुतः ब्रह्मणि सगुणतायाः प्रतिपादने तासां श्रुतीनां तात्पर्यम् । अत एव वेदान्त वाक्यानामखण्डार्थत्वमपि सिद्ध्यति। तथाहि ---

संसर्गासङ्गिसम्यग् धी हेतुता या गिरामियम्[1] ।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ।

अपर्याय शब्दानां संसर्गागोचर प्रमिति जनकत्वमखण्डार्थत्वम् , अथवा प्रातिपदिकार्थमात्रपर्यवसायित्वमखण्डार्थत्वम् ।

एवञ्च ब्रह्म शुद्धं स्वप्रकाशं आनन्द घनं सम्डनं चित्स्वरूपमेव ब्रह्मणः" वास्तविक स्वरूपम् ।तथा च ब्रह्म सर्वथा निरवयवं भेदत्रय शून्यं च । लोके अनात्मनित्रिधा भेदत्रयं प्रसिद्धं यथा ----

वृक्षस्य स्वगतो भेदः पत्र पुष्प फलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः[2] ।।इति।।

---

१- वेदान्त परिभाषायाम् ।।
२- पञ्चदशी ।।

अयं भाव:- लोके यथा पत्र पुष्पफलादिभि: वृक्षस्य स्वगतो भेद: प्रसिद्ध: ,तादृशो भेद: ब्रह्मणि नास्ति । एवञ्च वृक्षान्तरा सजातीयो भेद: प्रसिद्ध:तादृशोऽपि भेद: ब्रह्मणि नास्ति । एव शिलादित: वृक्षस्य यथा विजातीयो भेद: प्रसिद्ध: तादृशोऽपि भेद: ब्रह्मणि नास्ति । एवं एकमेवाद्वितीयं अनेन श्रुतिवाक्येन अनात्यनित्रयं यथा प्रसक्तं तथा सद्रूपास्वस्तुन्यपि प्रसक्तं स्वगतादिभेदत्रयम् । ऐक्यावधारणद्वैतप्रतिषेधविधायकै:त्रिभिर्पदै:क्रमेण निवार्यते अत एवं उक्तम् ---

सतोनावयवा: शङ्क्यास्तदंशस्यानिरूपणात् ।
नामरूपे च तस्यांशौ तयोरथाप्यनुद्भवात् ।।[१]

एवञ्च --

सदन्तरं सजातीयं न वैलक्षण्यवर्जनात् ।
नामरूपोपाधिभेदं विना नैव सतो भिदा ।।
विजातियमसद्वस्तु न स्यल्वस्तीति गम्यते ।
नास्यात: प्रतियोगित्वं विजातीयाद्भिदाकृत: ।।इति।।[२]

तथा च "अशब्दमस्पर्शमरूपमव्ययम्" अस्थूलमनण्वह्रस्वमदीर्घम्" केवलो निर्गुणश्च" इमा: सर्वाऽपि श्रुतय: ब्रह्मण: निर्गुणत्व निर्विकारत्वं

---

१- पञ्चदशी ।।
२- पञ्चदशी ।।

च प्रतिपादयन्ति । एवं यच्चक्षुषा पश्यति येन च सृष्टि पश्यति इति । यच्चोक्तं केश्चिद् सत्यकाम: सत्यसंकल्प: इत्यादि वाक्यं प्रमाणान्तरेण अनधिगतं सत्यकामादि प्रमाणान्तरेण अधिगतानां सत्यकामादि गुणानां प्रतिपादनं करोति । अत: तदवाक्यानां सत्यकामादि गुणानां मुख्यमेव तात्पर्यं मन्तव्यं तदसंगतम् ।

यद्यपि सत्यकाम: सत्यसंकल्प: इत्यादि वाक्यं अपूर्वगुणानां अविधायकम् तथापि अन्यविधिवाक्यानां वाक्यशेषत्वेन तेषां त्वत्पर्यं नहि गुणानां प्रतिपादने स्वीकरणीयम्, यथा अग्नि चयन प्रकरणे उक्तम् - "जर्तिलयवाग्वा वा जुहुयाद् गावीधुकयवाग्वा जुहुयात् , न ग्राम्यान् पशून् हिनस्ति, नारण्यान्, अथो खल्वाहु: -अनाहुतिर्वै जर्तिलाश्च गर्वीधुकाश्च पयसा अग्निहोत्रं जुहोति"[2] अत्र हि जर्तिल शब्देन कृष्ण तिलस्य एवं गर्वीधुक शब्देन वन्यस्य गोधूमस्य विधानं कृतम् । पुनश्च तन्निन्दापि कृता । न च ते हव्य द्रव्ये वस्तुत: उक्त वाक्यस्य न जर्तिलादीनां विधौ तात्पर्यं न च निन्दायाम् ,यत: तदर्थवादमात्रम् । अस्य एकवाक्यतापन्नविधिना विहितस्य पयस: स्तुतौ तात्पर्यम् । "अजक्षीरेण जुहोति"[3] आपस्तम्बीय विधि वाक्यम् , अत्र जैमिनि सूत्रस्य सुबोधिनी वृत्तौ अयं विचार: यथा उक्त वाक्यस्य जर्तिलादि विधानेन तात्पर्यं नास्ति ,तथैव वृत्तौ अस्य धर्मा:" इत्यादि वाक्यस्यापि ब्रह्मणि गुणविधाने

---

१- छा० ८।१।५ ।।

२- तै०सं० ५।४।२ ।।

३- जै०सू० १४।८।७ ।।

तात्पर्यं नास्ति,अपितु निर्गुणप्रकरणपठित गुणनिषेधपरक वाक्यापेक्षित निषेध्यभूत गुणानां समर्पण मात्रे एव तात्पर्यम्,अतस्तदन्यथासिद्धम् ।यदिद-मुच्यते "नेह नानास्ति किंचन"[1] अस्य वाक्यस्य "किंचन" इत्यनेकपदेन सामान्यतः ब्रह्मातिरिक्त गुणादि निषेध्य मात्रस्य उपस्थितिर्भवति । अतः "सत्यकाम सत्य संकल्पः" इत्यादि विशेषार्थक वाक्यानां निषेध्य समर्पकं न मत्वा गुणविधिपरकमेव मन्तव्यम् ।इति तन्न युक्तम् यतः उपास्यभूतस्य ब्रह्मणः गुणाः लोके न प्रसिद्धाः,अतः उपासना वाक्यानां प्रवृत्तिर्न भवेत् , अतस्त-न्निवृत्त्यर्थं "सत्यकाम सत्यसंकल्पः" इत्यादि वचनमुक्तम् । न्यायामृतकारेण यदुक्तं यदि श्रुति विहितपदार्थानां श्रुत्यैव निषेधः स्वीकृतो भवेत्,तदा "न हिंस्यात् सर्वा भूतानि" इदं वाक्यं "अग्नीषोमीयं पशुमालभेत" अनेन वाक्येन विहित हिंसायाः "नातिरात्रे षोडशिनं गृह्णाति" इदं वाक्यं "अतिरात्रे षो-डशिनं गृह्णाति"[2] अनेन वाक्येन विहित षोडशीग्रहणस्य "असद्वा इदमग्र आसीत्"[3] एतद् वाक्यं "सदेव सोम्येदमग्र आसीत्"[4] अनेन वाक्येन प्रतिपादितस्य ब्रह्मसत्त्वस्य निषेधकं तथा "द्वा सुपर्णा"[5] इत्यादि भेद परकं वाक्यं "तत्त्वमसि"[6] इत्यादि वाक्यैः प्रतिपादितस्याभेदस्य निषेधकं भविष्यति । न्यायामृतकार-स्यापि इदं कथनं अतएव निरस्तं भवति,यत् प्रकृते "केवलो निर्गुणश्च"[7] इत्यादि

---

१- बृ०उ० ४।४।१९ ।।
२- मैसं० ४।७।६ ।।
३- तै०उ० २।७ ।।
४- छा० ६।२।१ ।।
५- माण्डू० ३।१।१ ।।
६- छा० ६।८।७ ।।
७- श्वेता० ६।१ ।।

वाक्यं यस्याः गुणक्रियायाः निषेधं करोति, तत्र श्रुति प्राप्तम् । श्रुतिप्राप्तस्य पदार्थस्य श्रुत्यैव प्रमितः कर्तव्यः, न केवलं श्रुति प्रसक्तः यतः गौणरूपमेव प्रसक्तस्य जतिलादेः अत्यन्त निषेधः उपरिप्रदर्शितः। ब्रह्मणि गुणक्रिया न श्रुति प्रमिता । 'न हिंस्यात्' इदं वाक्यं अग्नीषोमीयहिंसायाः निषेधः एवं न क्रियते यत् तत् यागीय हिंसायाः अतिरिक्त हिंसां विषयीकरोति । अतः समानविषयकत्वं नास्ति, यदि च समानविषयो स्वीक्रियेत, तदा षोडशी ग्रहणाग्रहणवत् हिंसाअहिंसयोश्चापि विकल्पः प्राप्नुयात् । षोडस्याः ग्रहणाग्रहणप्रकाशक वाक्येषु न्यूनाधिकबलवत्वं स्वीक्रियेत् ,तदा विकल्पो न भवेत् । ब्रह्मगत असत्वस्य भेदस्य प्रतिपादक वाक्यानां स्वार्थे तात्पर्यं नास्ति, सत्वस्य अभेदस्य च बोधक वाक्यानां स्वार्थे एव मुख्यं तात्पर्यं भवितुमर्हति ।अतः तत्र प्रबल दुर्बल सद्भावात् बाध्यघातक भावः भवति ।अतः सर्वथा ब्रह्मनिर्विशेषं निर्गुणं निराकारमेव प्रतिभाति ।

अत्र च श्रीमद्भागवतस्य श्लोक द्वयं उदाहरणरूपेण उपस्थाप्यते ------

सर्वे न देवासुरमर्त्यतिर्यङ्-
    न स्त्री न षण्ढो न पुमान् न जन्तुः ।
नायं गुणः कर्म न सन्न चासन्
    निषेधशेषो जयतादशेषः ।।
            (श्रीमद्भा० ८।३।२४)।।

रूपं यत्तत् प्राहुरव्यक्तमाद्यं
    ब्रह्मज्योतिःनिर्गुणं निर्विकारम् ।
सत्तामात्रं निर्विशेषं निरीहं
    स त्वं साक्षात् विष्णुरध्यात्मदीपम् ।।
            (श्रीमद्भा० १०।३।२४) ।।

अस्मिन् श्लोक द्वये अध्यात्मदीपस्य परब्रह्मणा निर्विशेषत्वं स्पष्ट रूपेण प्रतिपादितम् । एवं भगवत्पूज्यपादा: श्रीमदाद्यशंकराचार्या: अपि ब्रह्मण: निर्विशेषत्वमेव अङ्गीकुर्वन्ति ।अत्र श्रीमद्रामानुजाचार्य:मध्वाचार्य: रामानन्दाचार्य प्रभृतय: तत्वविचारका: ब्रह्मण: सविशेषत्वमुपदिशंति। अत्र तावद् अस्यां परिस्थितौ इदं तावत् विवेचनीयम्,यत् किमत्र युक्तमिति, यत श्रुतिषु द्विविधं हि ब्रह्म प्रतिपाद्यते सविशेषं निर्विशेषान्च उक्तं हि वृहदारण्यकोपनिषदि "द्वे वाव ब्रह्मणो रूपे मूर्तन्चामूर्तन्च" । एवं हि द्विविध श्रुतिदर्शनेन ब्रह्म सविशेषं निर्विशेषान्च सिद्ध्यति । अत्र लोके सर्वस्यापि पदार्थस्य सविशेषत्व दर्शनात् नास्ति किंचिदपि निर्विशेषं एवं ब्रह्मापि नित्यत्व शुद्धत्वादि धर्म विशिष्टतया सविशेषमेव पूर्वपक्षिणामाशय: ।अत्र हि इदं विवेचनीयं भवता हि निर्विशेषं वस्तु निराक्रियते,अथवा निर्विशेष वस्तुन: सत्वं स्वीकृत्य असत्त्वं वा ? यदि सत्त्वं स्वीकृत्य तत्त निर्विशेषवस्तुनो निषेधो न स्यात् स्वत: निषेधायोगात् ।यद्यसत्वं स्वीकृत्य तदा निर्विशेषो वस्तुनो निषेधो न सम्भवति,शशशृङ्गादिवदसत: निषेधायोगात् ।

अत्र हि एवं अपूर्वपक्ष: विमृश्यते ।नाहं निर्विशेषं वस्तु निषेधामि: किन्तु ब्रह्मणि निर्विशेषत्वं प्रतिषेधामि । भवत्वेवं पूर्वपक्ष परिष्कारस्तथापि अयं प्रश्न:उपस्थितो भवति ब्रह्मणि सतो निर्विशेषत्वस्य निषेध: असतो वा ? उभयथापि निषेधा योग: ।न संभवति सतो निषेध: नापि शशशृङ्गादिवदसत:। ब्रह्म तु एकं एकस्मिन्नेव ब्रह्मणि सविशेषत्वं निर्विशेषत्वं उभय स्वीकरणं तु सर्वथा परस्पर विरुद्धम् । ब्रह्मविषया: श्रुतयस्तु उभयलिङ्गा प्रसिद्धा: "सर्वं कर्मा सर्व काम: सर्व गन्ध: सर्वरस:"[१] इत्येवमाद्या सविशेषा लि-

---

१- छा० ३।१४।२ ।।

लिङ्गा: । एवं निर्विशेषालिङ्गं च " अस्थूलमनण्वह्रस्वमदीर्घम् "[1] इत्यैवमाद्या: ।

अत्र च अयं विचारणीयो विषय: यद् ब्रह्मणि प्रमाणं तु श्रुतय: । अत एवौपनिषदं पुरुषं पृच्छामि इति श्रुत्यनुरोधेन औपनिषदं ब्रह्मे त्युच्यते ।श्रुतयस्तावत् उभयलिङ्गा: तर्हि अस्यां परिस्थितौ श्रुतीनां मुख्यं तात्पर्यं उभय लिङ्गे ब्रह्मणि स्वीकर्तव्यं । आहोस्वित् अन्यतरलिङ्गे वा । अन्यतरलिङ्गे:मुख्यं तात्पर्यं चेत् तर्हि सविशेषे निर्विशेषे वा ? उभय लिङ्ग श्रुत्यनुरोधेन उभयलिङ्गं ब्रह्म स्वीकर्तव्यं इति तु न युक्तम् । यत:पर ब्रह्मण: स्वभावत: उभयलिङ्गत्वासम्भवात् । नह्येकस्यैव वस्तुन: नामरूपा दिराहित्यन्च पामरेणापि स्वीकर्तुं शक्यम्,तम: प्रकाशकयो: परस्परं विरोधात् । यदि च उपाधि वशात् ब्रह्मण: सविशेषात्वमपि स्वभाव: इति तु न समीचीनम् । यत: उपाधि प्रभावमात्रेण कस्यापि वस्तुस्वभावस्य परिवर्तनं न संभवितुमर्हति । नहि स्वभावत: स्वच्छ: स्फटिक: जपाकुसुमाद्युपाधियोगात् अस्वच्छस्वभावो भवति । अतश्च अन्यतर लिङ्गं परिग्रह वाक्ये समस्त विशेषा रहितं निष्प्रपन्चं निरञ्जनं निर्विकल्पकमेव ब्रह्मयसर्वथा आदरणीयं न तद्विपरीतम्। सर्वत्र हि ब्रह्मप्रतिपादनपरासु श्रुतिषु " अशब्दमस्पर्शमरूपमव्ययम् "[1] इत्यैवमादिषु निरस्त समस्तोपाध्यनवच्छिन्नं निर्विशेषमेव ब्रह्मोपदिश्यते ।अतो निर्विशेषमेव ब्रह्मण: वास्तविकं स्वरूपम् ।यत्र कुत्रापि ब्रह्मण: सविशेषा प्रतिपादनपरा: श्रुतयो दृश्यन्ते अ सर्वकर्मा सर्वकाम: सर्वगन्ध:"[2] अथ य एषोऽन्तरादित्ये हिरण्मय:

---

१- क ३।१५ ,मुक्ति० २।७२ ।।

२- छान्दो० ३।१४।२ ।।

पुरुषो दृश्यते हिरण्यश्मश्रु हिरण्यकेश:[1] "अथ य एवोऽन्तरक्षिणि पुरुषो दृश्यते"[2] इत्येवमाद्या: इति । तत्र आसां सविशेषब्रह्मपराणां श्रुतीनां प्रामाण्यं उपासनायामेवावगन्तव्यम् ।अत्र च "अयमात्मा ब्रह्म" "प्रज्ञानं ब्रह्म" "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादीनि चत्वारिमहावाक्यामिति अखण्डं निर्गुणं निराकारं निर्विशेषमेव ब्रह्म अवगमयन्ति ।

वस्तुत: अद्वैतवादे मुख्यत: सर्वासां श्रुतीनां प्रामाण्यं निर्विशेष ब्रह्म प्रतिपादने एव न सविशेष प्रतिपादने यत: निर्विशेषत्वं हि ब्रह्मण: पारमार्थिक रुपं सविशेषत्वरुपं तु केवलउपासनार्थ: आरोपितं अपारमार्थिकं इति । अथ च निर्विशेषं ब्रह्मैव साक्षात्कृत्य जीव: कृतकृत्यतां प्राप्नोति ।अत एव श्रुतौ उक्तं"ब्रह्मविद: ब्रह्मैव भवति" "तमेवविदित्वअतिमृत्युमेति" "नान्य पन्था-विद्यतेऽयनाय" इत्यादि श्रुति: निर्विशेषपरब्रह्मण: साक्षात्कारस्य मोक्षसाधनत्वं प्रतिपादयिति । निर्विशेष ब्रह्म साक्षात्कारस्य ब्रह्माभ्यासात् । स च श्रवणमनननिदिध्यासनादि साधनरुप: । अतएव इदं स्मर्यते । ---

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वञ्च ब्रह्माभ्यासं विदुर्बुधा: ।।इति।।

एवं स एव पुरुष: परब्रह्माभ्यस्तुं योग्य: सदामश्च । यश्च विवेक वैराग्यादि सम्पन्न: उक्तं हि भगवत्पूज्यपादै: श्रीमद्भगवद्गीताया: द्वितियाध्याये भाष्ये" शमदमादिसाधनसंतितं हि मन: आत्मसाक्षात्कारे

---

१- छा० १।६।६ ।।

२- छा० १।७।५ ।।

न दाम्म् इति किन्तु ब्रह्मसाक्षात्कारे बाधकम् । अतः अद्वितीयात्म विज्ञानादेव मोक्षाख्यं फलं प्राप्यते । अद्वैतं हि ब्रह्म मुक्तं प्राप्यम् ।अत्र हि हि शब्दपूर्वकाद् इण धातोः कर्तृवाच्ये क्त प्रत्यये सति द्वित शब्दः सिद्ध्यति तस्यार्थः द्वि प्राप्त कर्ता, द्विति शब्दाच्च भावे अण प्रत्यये सति द्वैत शब्द निष्पद्यते ।न द्वैतमद्वैतं इत्यनया व्युत्पत्त्या अद्वैत शब्दस्यासमर्थः, द्वयोः पदार्थयोः अस्तित्वाभावः अथवा द्वितीयत्वाभावः इति, अथवा यत्र द्वयोः प्राप्तिर्न भवेत् इति सैव अद्वैत शब्दार्थः ।निर्विशेषब्रह्म अद्वैतमेव। मन्दपुरुषोः सगुणमेव ब्रह्म उपासयितुं शक्यम् ।अतः सविशेषत्वं मायोपाधिकल्पितम् ।अतएव कैश्चिद् उक्तम् ----

पारमार्थिकमद्वैतं द्वैतं मननहेतवे ।
भक्त्यर्थं भवद्वितं द्वैतयद्वैतादपि सुन्दरम् ।।इति।।

अपि च ---

निर्विशेषं परब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरुपणैः ।।
वशीकृते मनस्येषां सगुण ब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ।।इति ।।

ननु न्यायामृतकारेण योऽयमाक्षेपः उपस्थापितः निर्विशेषे ब्रह्मणि किं प्रमाणमिति ? तत् ज्ञानस्यविषये? अथवा अज्ञान निवृत्ति विषये, अर्थात् निर्विशेषस्य ज्ञानं केन प्रमाणेन भवति अथवा निर्विशेषस्याज्ञानं केन प्रमाणेन निवर्त्यते ? एवं विधाः प्रश्नाः अभिप्रेताः ? प्रथमस्तावद प्रश्नः

असङ्गतः, यतः निर्विशेषं ब्रह्म स्वयं प्रकाशः, तस्यप्रकाशः ज्ञानं वा न केनापि प्रमाणेन जायते, द्वितीयस्य प्रश्नस्य इदमुत्तरं निर्विशेषं ब्रह्म उपनिषद् प्रतिपाद्यम्, अतः केवलं उपनिषद् प्रमाणेन तस्याज्ञानं निवृत्तं न भवति । यथा वार्तिककारेण उक्तम् ----

माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति ।
सुषुप्त इव निद्राया दुर्बलत्वाच्च बाधते[1] ।। इति ।।

अतएव प्रत्यक्षम् ?अनुमानं वा ? अयं प्रश्नोऽपि नोत्थितो भवति ।

अपि च उपनिषदः निर्विशेष वस्तुनि मुख्यावृत्तेः गौणीवृत्तेर-भावेऽपि लक्षणायाः वृत्ति संभवोऽस्ति । लक्षकपदानां स्वार्थोपस्थापने न शक्यार्थ सम्बन्धिताया: अवच्छेदक धर्मस्य अपेक्षा भवति न च पदमात्रे अपेक्षित अन्वयितावच्छेदक धर्मस्यापेक्षा, यतः संसर्गबोधक वाक्यघटकपदेष्वेव उक्त धर्माणामपेक्षा भवति, न अखण्डार्थघटकपदानाम् । वेदान्तवाक्यानां संसर्गविगाहि ज्ञानस्याजनकत्वेऽपि असंदिग्ध अविपर्यस्त निर्विकल्पक बोधजनकत्वात् प्रमाणत्व-मभ्युपगच्छन्ति । एवं आकांक्षादिविशिष्टत्वात् वाक्यमपि उच्यते । वेदान्त-वाक्यानां निर्विशेष वस्तुनि कस्यापि वृत्तेरभावेऽपि सुषुप्तपुरुषस्योत्थापक वाक्यवत्, निर्विशेषार्थ पर्यवसायित्वात्, वार्तिककारेण वेदान्त वाक्यानां प्रमाणत्वमभ्युपगतम् । उक्तं हि ----

---

१- बृह०वा०भू० - ६०५ ।।

अगृहीत्वैव सम्बन्धं अभिमानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुप्रप्ते बोधिताः परैः[1] ।।

अयमाशयः - पार्श्वस्थाःपुरुषाः" उत्तिष्ठत जाग्रत" एवं विधवाक्य श्रुत्वा सुषुप्त पुरुषः वाक्य वाक्यार्थयोः सम्बन्ध अगृहीत्वैव जागर्ति । एतदनुभवसिद्धं यत् जम्बवसुप्तस्य जाग्रदवसुषुप्तावस्थायां शब्दार्थयोः संगति ग्रहो न भवति । अतः वार्तिककारः इदं तथ्यं स्पष्टमुक्तवान्,यत् अगृहीत शक्तिमपि पदं बोधकं अतएव प्रमाणम् । लक्षणास्वीकार पक्षे तस्यैव व्यक्तेः प्रमाणाभिधानमन्तराऽपि निर्विशेष वस्तुनःज्ञानं भवत्येव । यस्य अन्तःकरणं शुद्धं अस्ति, अतः यस्य अन्तःकरणं शुद्धं नास्ति तदर्थं प्रमाणाभिधान प्रसङ्गो न उपस्थितो भवति, यतः शक्य संबन्धं ज्ञानं बहूनां पुरुषाणां भवत्येव ।किन्तु तात्पर्यज्ञानं तु यस्य कस्यापि विशिष्टस्य पुरुषस्य भवति । एवं विधः पुरुषः कश्चित् विरलः एव, न च सर्वस्यपुरुषस्य तात्पर्यं ज्ञानम् । पुरुषगतविशिष्टता अन्तःकरणस्य शुद्धिरुपाऽप्रतिबन्धकता उच्यते । उक्तंहि--

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः"

अतः प्रतिबन्धक निवृत्तौ सत्यां संबन्ध ज्ञानं विनापि वेदान्त वाक्यै आत्मसाक्षात्कारः भवत्येव ।अस्य विषयस्य विवेचनं गीतायाःगूढार्थदीपिकायां कृतं वर्तते ।

---

१- बृहव्वा०भू० -६० ।।

अपि च संशयनिवृत्तौ ज्ञानमात्रमेवविचारस्य फलं संशयनिवृत्तिस्तु अनभिमत कोटिप्रतिदोषकोपकलादित निष्प्रभाव धर्मिज्ञानेनापि जायते ,अत: संशय निवृत्यर्थं सप्रकारकज्ञानमनिवार्यम् । सप्रकारकं निष्प्रकारकं एतदुभयविधं निश्चयं यदि संशयस्य निवर्तक स्वीकृतं भवेत् तदा गौरवं स्यात्,यत: प्रमाण-सिद्धपदार्थ: लघु वा भवेत् गुरु वा भवेत् , स च स्वीकरणीय: एव । तस्मात् सगुणत्वे साधकाभावात्,बाधकसद्भावाच्च निर्गुणत्वे सद्भावात् निर्गुणमेव ब्रह्म इति सिद्धम् ।

मध्वमत प्रतिपादनम् :---

यदेतद् अद्वैतिभिर्यदुक्तं तन्न सहन्ते मध्वाचार्य: । तेषां इदं मतं नहि ब्रह्मनिर्विशेषं निर्धर्मकं निर्विकष्टं निर्विकल्पकं निरंश: किन्तु ब्रह्म हि सगुणं सविशेषका सधर्मकमिति ।" बृहन्तोऽस्यधर्मा:" इति भगवति श्रुतिरेव ब्रह्मण: सविशेषत्वं सगुणत्वं सप्रतिपादयति । एवं ---

ब्रह्मेशानादिभिर्देवै:समेतैर्यद्गुणांशक: ।
नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ।।

इत्यादिस्मृत्यापि ब्रह्म सगुणं सविशेषं हति । इयं हि स्मृति: इदं प्रतिपादयति यत् ब्रह्मादय: शंकरादि सर्वे देवगणा: परस्परं मिलित्वाऽपि यस्य ब्रह्मण: एकांशस्यापि सम्यक् व्याख्यां न कर्तुं पारयन्ति ।तद् ब्रह्म अनन्त गुणसम्पन्नं तथा च अनुमानप्रमाणेनापि ब्रह्मण: गुणवत्त्वं प्रतिपाद्यते । तथाहि ब्रह्म धर्मवत् पदार्थत्वात् घटादिवत् । अनेनानुमानेनापि ब्रह्मणि धर्मवत् पदार्थत्वात् घटादिवत् । अनेनानुमानेनापि ब्रह्मणि धर्मवत्त्वं निश्चीयते ।

उक्त श्रुत्यादि प्रमाणैः ब्रह्मणः धर्माः अपि ब्रह्मसमान सत्ताकाःसाधिताःअतः काल्पनिकाम् धर्मान् स्वीकृत्य सिद्धसाधनतायाः उद्भावनं न कर्तुं शक्यते ।

एवं हि ब्रह्मणः सगुण सविशेषप्रतिपादिकाः वहव्यः श्रुतयः प्रमाणत्वेन उदाहृयन्ते,तथाहि सर्व कर्मा सर्वकामः सर्वगन्धः[1] इति । अथ य एषोऽन्ततदित्ये हिरण्य मयः पुरुषो दृश्यते[2] हिरण्यश्मश्रु हिरण्यकेश :[2] 'अथ य एषो अन्तरक्षिणि पुरुषो दृश्यते[3] इति । आसां श्रुतीनां सविशेष ब्रह्म प्रतिपादने तात्पर्यं न भवेत् ,तदा आसां सविशेष ब्रह्म पराणां सर्वासां श्रुतीनांम्प्रामाण्यांदुरुपरिहरम् । अतः आसां श्रुतीनां प्रामाण्यानुरोधेन इमाः सर्वाः श्रुतयः सविशेष सगुणमेव ब्रह्म प्रतिपादयन्ति । एवं सत्यकामः सत्यसं-कल्पः मनोमयः प्राणशरीरः इत्यादि श्रुति वाक्यान्यपि अधिगतानां सत्य कामादिगुणानां प्रतिपादनं कुर्वन्ति । अतः उक्त वाक्यानामपि सत्यकामत्वादि गुणानां प्रतिपादने एवं मुख्यं तात्पर्यं अवगन्तव्यम् ।

ये हि अद्वैतवादिनः ब्रह्मणि धर्माः न सन्ति,अतः ब्रह्मनिर्धर्मकं इति वदन्ति तान् प्रति अयमाक्षेपः तथाहि ----

---

१- छा० ३।४।२ ।।

२- छा० १।६।६ ।।

३- छा० १।७।५ ।।

ब्रह्मणि तात्त्विकधर्मसाधनाय अनुमानानि :---

(१)ब्रह्मधर्मिसत्तासमानसत्ताकधर्मवद्, उक्तसत्ताकाभावरूपधर्मवद्वा, यावत्स्वस्वरूप मनुवर्तमान धर्मवद्वा, उक्तविशेषणवद्भावरूपधर्मवद्वा ,स्वज्ञाना-बाध्यभावरूपधर्मवद्वा, धर्मैर्भावरूपैर्धर्मैर्वा हीनं नावतिष्ठते पदार्थत्वाद्, भावत्वाद्, अभाव विलक्षणत्वाद्वा, घटवत् ।

(२) ब्रह्म स्वज्ञानाबाध्यप्रकारवत्, स्वारोपितव्यावर्तकस्वज्ञाना-बाध्यप्रकारवद्वा, अधिष्ठानत्वाच्छुक्तिवत् ।

(३) ब्रह्म स्वाज्ञानाबाध्यदु: खव्यावृत्तिमत्, स्वज्ञानाबाध्यदु:ख व्यावर्तकधर्मवद्वा, दु:खानात्मकत्वाद् घटवत् ।

(४) ब्रह्म स्वज्ञानाबाध्य प्रकारक ज्ञान विशेष्यम्, संदिग्धत्वाद्, विचार्यत्वात् निर्णेतव्यत्वाच्च, स्थाणुवत् ।

(५) ब्रह्म वेदान्ततात्पर्यगोचर प्रकारवद् ,वेदान्तविचारविषय-त्वात् ,यदेवं तदेवं यथा कर्मकाण्डविचारविषयो धर्म: ।

(६) ईश्वर: सदाऽवाप्तसमस्तकल्याण गुण:, सदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वाद्, यो यदा यत्प्रेप्सुत्वे सति यत्रशक्त: ,स तदा तद्वान्, यथा चैत्र: ।

(७) ईश्वर: सदा त्यक्त समस्तदोष: सदातज्जिहासुत्वे सति तत्यागे शक्तत्वाद्, यो यदा यज्जिहासुत्वे सति यच्यागे शक्त: ,स तदा त्यक्ततद्दोष ,यथा चैत्र: । तत्प्रेप्सादिकं च प्रेक्षावत्त्वादिनाविपदोऽधिष्ठा-नत्वसंदिग्धत्वादिकं न स्यादित्याद्यनुकूलतर्कसमाथानुमानानां च सत्त्वात् ।

न चानवस्थानिरासाय कश्चिद्धर्मो निर्धर्मक इति तत्राधहेतोर्व्यभिचारः, साध्यस्वरूपस्य निर्धर्मकस्य पदार्थ त्वात्मकस्य हेतुरूपस्य च धर्मस्य भावाभावाभ्यां व्याघातात् । प्रमेयत्वाभिधेयत्वादीनामबाधितानुभवबलेन त्वदभिमतमिथ्यात्वदृश्यत्वादिवत् स्ववृत्तित्वाच्च । गोत्वादेरपि गोव्यक्तिरेव वा गोत्वं वा तं स्वाश्रय व्यक्तिं प्रति अन्यस्माद्व्यावर्तकत्वं वा व्यावर्तकमिति न दुःखात्मकत्वस्य तत्र व्यभिचारः ।

न च श्रुति सगुण ब्रह्मपरा, न तु ब्रह्मपरा इति वाच्यम्,सगुणातिरिक्तस्य परस्याप्यसिद्धेः ।त्वत्पदोऽपि तात्त्विकगुणवद्व्यक्त्यन्तराभावाच्च । पर पराणामित्यादिस्मृतौ,परात्परत्वोक्तेश्च । अन्यथा "सदेव सोम्येदम् असद्वा इदमग्र", इति सदसच्छ्रुतौ अपि परापरब्रह्मविषये ,ग्रहणाग्रहणश्रुती अपि परापरयाणविषये स्याताम् ।"असन्नेव स भवति असद्ब्रह्मेति वेद चेदिति श्रुतिरपि नासत्त्वानिन्दार्था,किं तु शून्यतापत्तिरूपपरमभोदारीति स्यात् । न चेदानीं सगुणं दशान्तरे तु निर्गुणम् । तथात्वेऽपि गुणानामनित्यत्वमात्रापत्त्यात्त्वदभिमतमिथ्यात्वासिद्धेः ।

ज्ञानं नित्यं क्रिया नित्या बलं नित्यं परात्मनः ।
एष नित्यो महिमा ब्राह्मणस्य ।। इति ।।

इत्यादि श्रुतेश्च ।"एष नित्यः" इति श्रुतिश्च ब्रह्मपरा पूर्वत्र नावेदविन्मनुते तं बृहन्तमिति ब्रह्मणः प्रकृतत्वात् । उत्तरत्र न कर्मणा वर्धते नो कनीयान् ।तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति ब्रह्मलिंगात् । बृहदारण्यके सर्वस्यवशी सर्वस्येशानः सर्वस्याधिपतिः । स न

साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् । एष सर्वेश्वर एष भूताधिपतिःएष भूतपाल' इत्यादिना ब्रह्मोक्त्वा तत्र संमतित्वेन तदेतदृचाभ्युक्तमिति एष नित्य' इत्यादिमंत्रस्योदाहृतत्वाच्च । अन्यथा ब्रह्मेदानीं सदृशान्तरे त्वसदिति स्यात् । न चौपाधिकाधर्माः,औपाधिकत्वस्य सोपाधिकाध्यस्तत्वरूपत्वे श्रुत्यप्रामाण्यापातात् ।वक्ष्यमाणसत्यत्वश्रुतिविरोधाच्च । उपाधिकृतत्वरूपत्वे तूक्तनित्यत्वश्रुतिविरोधात्,अन्तःकरणादिरूपोपाधिसृष्टेः प्रागेवोदितत्वात्तिश्रुतेश्च ।'स्वाभाविकी ज्ञान बल क्रिया चे' त्यादिश्रुतेश्च। न च यौगलब्धयोगिशक्त्यादिवद्धर्ममात्रेण तदुक्तिः,संकोचकाभावेनोक्तनित्यत्वश्रुत्यनुसारेण स्वाभाविक ज्ञानसमभिव्याहारेण चौपाधिमात्रनिषेधात् । अन्यथा ब्रह्मणः सत्वमौपाधिकं असत्त्वं तु स्वाभाविकमिति स्यात् । न वाऽतात्त्विका गुणाः श्रुत्या गुणमात्रोक्त्या तात्त्विकानुक्तेरिति वाच्यम् , नित्यत्वोक्तिसामर्थ्यात्,विशयाबाधलक्षणप्रामाण्यस्यौत्सर्गिकत्वात्,सत्यः सोऽस्य महिमे' त्यादि श्रुतेश्च तत्सिद्धेः ।अन्यथा सत्यं ज्ञानं तत्त्वमसी' त्यादि श्रुत्युक्तं ब्रह्मसत्त्वैक्यादिकमपि तात्त्विकं न स्यात् ।

ननु सगुणवाक्यं वाचंधेनुमुपासीतेत्यादिवदुपासनार्थम्,उपासनायाः कर्तव्यत्वे गुणेषु च तात्पर्यं वाक्यभेदादिति चेन्न ----

उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च ।
उभयत्रापि तात्पर्यमात्मोपासादिके विधौ ॥

इति स्मृतिविरोधात् 'यः सर्वज्ञ' इत्यादौ उपासनाविधेरश्रवणाच्च । कल्पनस्य च निर्गुणवाक्येऽपि शक्यत्वात् ।

अपि च 'साक्षी चेता केवलो निर्गुणः' इति वाक्यात् पूर्वत्रोत्तरत्र च गुणोक्तेस्तन्मध्यस्थं निर्गुण वाक्यम् उपांशुयाजन्यायेन तदनुगुणं नेयम् । किं च निर्गुणशब्देन गुणमात्रनिषेधोऽयुक्तः साक्षी चेतेत्यादिभिर्द्रष्टृत्वादि-विधानेन व्याघातादिति संकोचोऽस्तु साक्षित्वादेरतात्त्विकत्वादविरोध इति तु निरस्तम् । उक्तं च ----

युक्तोऽयुक्तश्च यत्रार्थ आगमस्य प्रतीयते ।
स्यात्तत्र युक्त एवार्थो न वाक्यायुक्तिरिष्यते ॥

एवं च ----

उपक्रमादिन्यायेन श्रुतिलिङ्गनयात् तथा ।
विशेषसामान्यनयान्न्यायान्निरवकाशतः ॥
बाहुल्यन्यायतश्चोपजीव्यत्वन्यायतस्तथा ।
पशुद्वागनयाच्चैव सविशेषनयात् तथा ॥
उपांशुयाज न्यायेन युक्तायुक्तनयात् तथा ।
आहतत्त्वात्सूत्रकृता प्रबला सगुणश्रुतिः ॥

तस्मादहिंसावाक्यमग्नीषोमीयेतरहिंसाया इव निर्गुण वाक्यं श्रौतसार्वस्यादीतरतकामासप्राप्तहेयसुखादिगुणानां निषेधकमिति न तद्बाधकम् ।
एवंच ----

हिंसाऽहिंसावाक्यसाम्यादगुणनिर्गुणवाक्ययोः ।
अविरोधेऽप्यमानत्वं ब्रूषे सोऽसौहृदात् ॥

किंच निर्विशेषत्वरूपविशेषभावाभावाभ्यां मूकोऽहमितिवत् स्वव्याघातः । यदि निर्विशेषत्वरूपविशेषोऽप्यनेनैव निषिध्यते, तर्हीयमपि वचनक्रिया मूक इत्यनेनैव निषिध्यत इति समम् । तदुक्तम् - निर्विशेषत्वमेतेन मूकोऽहमितिवद् भवेदिति । किं च ब्रह्मणः शून्यादनिर्वाच्याच्च तत्त्वतो विशेषाभावे तत्त्वतस्तदेव स्यात् । भावे तु सविशेषत्वम् । किं च ब्रह्मणो निर्विशेषत्वे वेदान्तविचारविषयत्वमप्युक्तम् । तदुक्तम् ---

इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् ।
इत्थं भावो हि धर्मोऽस्य न चेन्न प्रतियोगिता ।

इति ।

किं च ब्रह्मणि धर्मारोपार्थमेव केचिद्धर्माःसत्याः स्वीकार्याः इदंत्वादिना ज्ञात एव शुक्त्यादौ धर्मान्तरारोपात् । तदुक्तम् ----

धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने ।
सर्वधर्मविहीनस्य धर्मारोपः क्व दृश्यते ।।इति ।।

अभावरूपधर्माःसन्तीति चेन्नाभावत्वं तत्र हेतुः, अतिप्रसङ्गात्। किं तु प्रामाणिकत्वं तच्च भावेष्वपि समम् । यदि चाभावो ब्रह्माभिन्नःयदि वा पञ्चमप्रकारो न तु सन्निति सदद्वैताविरोधी, तर्हि भावोऽपि तथास्तु । तस्मात् ----

बूतेऽसतोऽपि भवेहादीन्दोषानिन्वष्पोगुणान् सतः ।
निह्नुते परमे तत्त्वे द्वेषादेवासुरो जनः ॥

तस्माद् ब्रह्म सगुणमेव इति ।

## विशेषपदार्थ निरूपणम्

द्वैतवादिभिः यत् सनिरोषं ब्रह्म स्वीक्रियते तत्सर्वथा असङ्गतमेव विशेषपदार्थस्य निरूपणासंभवात् । तथाहि नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये ते विशेषाः इति लक्षणं यदुक्तं तदपि दुष्टमेव, यतः नित्य द्रव्यैक वृत्तित्वत्रयोग परिहारतः। न लक्षणमति व्याप्तेः तथात्मत्वमनस्त्वयोः इति । अत्र नित्यद्रव्यवृत्तयो अन्त्याः विशेषाः अस्य भाष्यस्य व्याख्यानावसरे कन्दलकारैः इदं लक्षणमुक्तं नित्येष्वेव द्रव्येष्वेव वर्तन्ते एव ये ते विशेषाः तदिदं कन्दलिकारोक्तं लक्षणं नोचितम् ।अस्ति वर्तते एतावन्मात्रकथनेन कादाचित्कत्वं प्राप्तुं शक्यते ।कदाचित् नित्यद्रव्ये: विशेषस्य अयोगोऽपि भविष्यति । अस्य अयोगस्य व्यावृत्त्यर्थं उक्तं वर्तते एवं । एतावता अयं सिद्ध्यति सर्वनित्यद्रव्येष्वेव सदा वर्तमानः पदार्थः विशेष इत्युच्यते इति । इदं लक्षणं आत्मत्वमनस्त्वयोःअतिव्याप्तम्,यतः आत्मत्वं मनस्त्वं च नित्यद्रव्येष्वेव सदा वर्तन्ते। यद्यवमुच्येत कालाकाशादिषु अवर्तमानत्वात्,आत्मत्वं मनस्त्वं च न सर्वनित्यद्रव्यवृत्ति इति । विशेषास्तु नैवं विधा भवतु,तर्ह्ययं नियमः सर्वद्रव्यनित्येषु वृत्तिरेव भवेत् ।तदिदमपि कथन नोचितम्,यतः एवं विधं लक्षणं सर्वविशेषेषु अव्याप्तं नहि सर्वे विशेषाःसर्वत्र सम्भवन्ति अर्थात्

विशेषात्वनन्ता:भवन्ति । एकस्य द्रव्यस्य विशेष: अपर द्रव्येषु न भवति, अत: सर्वे विशेषा: सर्वनित्यद्रव्येषुन भवंति । यदि च इदमुच्येत यज्जाति-विशिष्टस्यपदार्थस्यसर्वनित्यद्रव्येषु वृत्तिर्भवति, तज्जाति विशिष्ट: पदार्थ: विशेष इत्युच्यते इति । इदमपि लक्षणं न वक्तु शक्यम्,यत: नहि विशेषे विशेषात्व जाति स्वीक्रियते ।इदं च पूर्वमेव उक्तम् । यद्यपि जातिस्थाने उपाधे: प्रवेशेसति उक्तदूषणस्य वारणं कर्तुं शक्यते। तथापि इदं लक्षणं व्यर्थमेव, यत: विशेषात्वमेव यदि उपाधि: तदा विशेषात्वं लक्षणं भविष्यति । एवं विशेषात्वरूपोपाधे: असिद्धौ सत्यां उपाधि घटितं लक्षणमेव न भविष्यति।

एतदभिप्रायेणैव उदयनाचार्य:किरणावली ग्रन्थे (पृ०२५)उक्तम् "एतेन एक द्रव्या: स्वरूपसन्त:इति लक्षणं सूचितम्" (अर्थात् एकमात्रद्रव्याश्रित: सत्तारहित:पदार्थ:विशेष:इत्युच्यते । किन्तु एतदपि लक्षणं असङ्गतमेव,यत: एक द्रव्यत्वमेव दुर्निरूपम् ।तथाहि एकद्रव्यत्वस्य कोऽर्थ ? किम् एकत्वविशिष्ट द्रव्ये वर्तन्ते तथा सत् स्वभावा अपि, तत्र अन्याकाचन् सत्ताजाति: न स्वीक्रियते। एवं द्वितीय पक्ष स्वीकारे इयं जिज्ञासा उदेति यत् अधिष्ठत्वस्य कस्तावदर्थ ? क्वचिद् वृत्तिविशिष्ट अन्यावृत्तित्वं ? अथवा स्वाश्रयभिन्नावृत्तित्वं? प्रथमपक्ष-स्वीकारे जातिष्वेव अतिव्याप्ति दूषणं स्यात्,यत: गुणगतं जातय: गुणा-दन्य विशेषादिषु अवृत्तय: ।अतएव द्वितीयोऽपि पक्ष: न समीचीन : यत: सर्वत्रावृत्तित्वात् स्वाश्रयभिन्ने जातय: न सन्ति ।यदि च स्वाश्रयभिन्ननिरूपित वृत्तित्वस्य अधिकरणता अयमर्थ: स्वीक्रियेत तर्हि स्वशब्देन प्रकृतविशेषस्य ग्रहणे आत्माश्रयो दोष: भवति ।यदि उच्येत प्रत्येक विशेषस्य पृथक् -पृथक् लक्षणं भविष्यति, यथा अस्मिन्नात्मनि वृत्ति:सन् अस्याद् भिन्न नित्यद्रव्येषु वृत्तिर्न भवत्, स एवअस्य आत्मन: विशेष: उच्यते ।तर्हि इदमपि कथनं न युज्यते,यत: अन्योन्याश्रय दोषग्रस्तत्वात्,तथाहि वैशेषिका: नित्यद्रव्याणां भेद ज्ञानार्थ

विशेषपदार्थं मन्यन्ते,अत: विशेषस्यसिद्धौ सत्यां नित्यद्रव्याणां भेद ज्ञानम् , एवं नित्यद्रव्याणांभेद ज्ञान सिद्धौ विशेषस्य ज्ञानम् । अत: तद् ग्रहसापेक्षा-ग्रहसापेक्षा विषयत्वरूप: अन्योन्याश्रय इति ।यदि च नित्य द्रव्याणां भेद-ज्ञानं अन्येनानुमानादिप्रम णेन यदि भवेत्,तदा विशेष पदार्थाभ्युपगम: एव व्यर्थ: ।

एवं आत्मत्वमनस्त्वाभ्यां भिन्न: नित्यमात्र समवेत सत्तारहित: पदार्थ: विशेष इत्युच्यते । इदं च शिवादित्यमिश्रोक्त लक्षणंमपि न साधु यत: परममहत्वजातौ अतिव्याप्तित्वात् । इदं परममहत् अन्या अनुगत प्रतीत्या बोध्यं परममहत्वं जातिपरममहत् परिमाणै: सिद्धम् । एवं महत् जाते: व्यञ्जकस्यापि अभावो नास्ति,यत: परममहत् परिमाणत्वमेव तस्या: व्यञ्जकम्। एतस्यां परिस्थितौ अस्मादेवव्यञ्जकाद् परममहत् व्यवहारोऽपि सेत्स्यति , जाति कल्पना व्यार्था: इति । नायं संशयो युक्त:,यत: व्यञ्जकद्वारानिराक्रियमाण यान्जातौगोत्वादेरपि निराशो भविष्यति, इत्थं परमाणुत्वमपि जाते: स्वीकर्तव्या भविष्यति,अयमपि संशयो अनुचित : एव ,यत: परमाणुत्वस्य जाति स्वीकारेपृथिव्यादिना परापर भावस्यासंभव: प्रतिबन्धक: ।अर्थात् पृथिवीत्वं यदिपराजाति: ,तदाव्याप्य परमाणुत्व जाति पृथिवीत्वस्य अव्याभिचरितत्वात्, जलादि परमाणुषु न स्थास्यति,यदि पृथिवीत्वं अपराजाति: तदा परमाणुत्वं परास्वीकरणीया भविष्यति । पुन: परमाणुत्वादिना अव्यभिचरितत्वात् पृथिवीत्वं जलादि परमाणुष्वपि स्थास्यति ,घटादिषु न भविष्यति । अत: परमाणुत्वं जाति: न स्वीकरणीया । किन्तु परममहत्व जातस्त्वित्र न कोऽपि प्रतिबन्धक:,अत: परममहत्वजातौ उक्तलक्षणस्य अति-

व्याप्तिरस्त्येव । एवं च उक्त लक्षणे नित्यमात्र समवेतत्वस्य कोऽर्थः । कस्मिन्नेकस्मिन् नित्ये वृत्तित्वं ? अथवा सर्वनित्यवृत्तित्व पक्षाध्यऽपि लक्षणे अतिव्याप्तिदूषणं दुर्निवारम् , अपि च प्रत्येक विशेषोऽपि सर्वनित्यद्रव्येषु न वर्तते ।

किं च किमतैर्लक्षणैर्लक्ष्यम्,द्रव्यादिपञ्चकम् ?उतातिरिक्तम् ? नाद्यः,असिद्धेः नान्त्यः,तत्र प्रमाणाभावेनासिद्धत्वादित्यभिसंधिराह किंवात्र प्रमाणमिति ? "समानजातिगुणकर्मकार्याःपरमाणवोऽन्योन्यव्यावर्तकधर्मसमवायिनः द्रव्यत्वात् गवादिवत् ।" तथा सत्तासामान्यसमवायातिरिक्तभावासंसर्गिणीजातित्वात्गोत्ववत्" इति लीलावतीकारोन्नीतमनुमानं प्रमाणम्। अत्र च जातिभिर्गुणैः कर्मभिस्तदारब्धकार्यैश्च व्यावर्तकैरर्थान्तरतापरिहाराय तैः समानताग्रहणम् । निरवयवद्रव्यत्वादि मिथघटादि व्यावर्तकैरर्थान्तरतापरिहारायान्योन्येत्युक्तम् । गवादिषु च गोत्वादिना साध्यप्रसिद्धिः । तथा सत्तेति । भावासंसर्गिणीत्युक्ते सामान्यसमवायासंसर्गित्वसाधनेन तत्सिद्धिपर्यवसानार्थान्तरता तथाऽसंसर्गिणीत्युक्तेऽभावासंसर्गित्वपर्यवसायित्वयार्थान्तरता, तदुभयनिवृत्त्यर्थं सामान्यसमवाया तिरिक्तभावासंसर्गिणीत्युक्तम् । यस्माच्च द्रव्यादित्रयासंसर्गित्वस्य व्याघाभावात्सा व्यावर्त्यते सोऽन्त्यविशेषः । तादिति पयति ।अय भावः विशेष पदार्थे किं प्रमाणमित्याकाङ्क्षायां लीलावतीकारेण यद् अनुमानद्वयं प्रमाणत्वेन उपस्थापितं तदेवं (१) समानजाति समानगुणकर्म,समानकार्यवन्तः परमाणवः अन्योन्य व्यावर्तकधर्मस्य समवायिनः द्रव्यत्वात् गौरितिवत्" ।अनेनानुमानेन अयोग्य व्यावर्तक धर्मः यः सिद्ध्यति स एव विशेष पदार्थः। एवं हि (२) सत्ता समान्य समवायाभ्यां भिन्न भावपदार्थेषु असमवायिनी जातित्वात् गोत्वत् । (न्यायवली पृ० ७०२) अनेनानुमानेन यत्पदार्थस्य असमवायिनी सत्ता सिद्ध्यति स एव विशेष पदार्थः इति

यदुक्तं तदनुमानद्वयमपि समीचीनष्ट , यतः प्रथमे प्रयोगे पृथक्त्वमादायसिद्धसाधनम् । न्यायलीलावतीकारस्य यदिदं कथममस्ति पृथक्त्वं पृथत्वान्तरेण सदृशमस्ति,अतः तस्मात् व्यावृत्ताकारं ज्ञानानोत्पद्यते,यतः व्यावृत्ति बुद्धिः येन धर्मेण उत्पद्यते तत्सदृशः धर्मेण न भवति । यथा अश्वात् कुन्जरबुद्धिः । अतः परमाणुरिपि परमाण्वन्तरात् व्यावृत्ति बुद्धिः पृथक्त्व एवं सदृशधर्मेण न साध्या । अपि च लीलावतीकारस्य कथंन तदपि असङ्गतं ,यतः विशेष पदार्थोऽपि परस्परंसदृश एव , पुनः कथं स व्यावर्तकः भविष्यति ? एव द्वितीयानुमानेऽपि प्राभाकरमते आश्रयासिद्धिः ,भाट्टमते अप्रसिद्धविशेषणता इत्येवं दोषाद्वयेन दूषितत्वात् नोक्तानुमानं विशेष प्रमाणं भवितुमर्हति । सत्तायाः जातौ अस्वीक्रियमाणायां प्राभाकरमते आश्रयासिद्धि दोषः ।एव माहःसमवायं नाङ्गीकरोति,अतस्तन्मते समवाय घटित उक्तसाध्यरूप विशेषणस्य अप्रसिद्धिः । एवं वैशेषिकसम्मतभावपदार्थस्य अस्वीकारेऽपि सत्तायां तस्य असंसर्गित्वमस्ति एव ( कस्यापि वस्तुनः कुत्रापिअसंसर्गिता प्रकारद्वयेनापि घटते एव एकस्तावद्वस्तुनः संसर्गएव न भवेत्,अथवा वस्त्वेव न भवेत् । अतः अर्थान्तरताऽपि जायते । अपरं च उक्तानुमाने सामान्यसमवायभिन्नभाव शब्देन किं द्रव्यगुणकर्मणां विवदा ? आहोस्वित विशेषपदार्थस्य ? अथवा भावमात्रस्य इति ? तत्र नाद्यः पक्षः समीचीनः । प्रथमपक्षास्वीकारेऽपि अपसिद्धान्तापत्तिः ।यतःसत्ता द्रव्यगुणकर्मसु वैशेषिकैः स्वयं स्वीक्रियते । एवं द्वितीय पक्षास्वीकारे अप्रसिद्ध विशेषणतानामकं दूषणं,यतः विशेषासिद्ध्या विशेष घटित प्रसिद्धिरेव कुतः भविष्यति ?एवं तृतीयोऽपि पक्षो इयं जिज्ञासा उदेति ,यदत्र असंसर्गित्वपदेन किम् असंसर्गित्व मात्रं विवक्षितं ?अथवा संससर्गत्वात्यन्ताभावस्य अधिकरणता ? अत्रापि प्रथमपक्षस्वीकारे सिद्धसाधनता दूषणं स्यात् , यतः अतीतानागत व्यक्तिभिःसह सत्ताया असंसर्गिता स्वीक्रियते एव । द्वितीयेऽपि

पक्षे दृष्टान्तस्य साध्यविकलता, यतः गोत्वे यत्किञ्चिद्भावस्य गो निरूपित संसर्गितायाः विघकान त्वात् । संसर्गित्वस्यात्यन्तामावोनास्ति, एवं आकाशं गुणसामान्य व्यतिरिक्तसमवायि, द्रव्यत्वात् घटवत् । इदं मानमनोहर कारोक्त मनुमानं विशेषपदार्थं साधने अक्षमम्, यतः प्रामाकरमते शक्ति पदार्थमादाय सिद्धसाधनतादूषणमायास्यति । यतःप्रामाकर गुणसामान्य व्यतिरिक्ता स्वशक्तिंआकाशसमवेतां मन्यते । एवं समवायानङ्गीकृत्वे माट्टवेदान्तिनांमते अप्रसिद्धविशेषणता । एवं कालोपाध्युवहतत्वाच्च , इत्मनुमानं आभास समान योगिक्षमम् । तस्मात् न केनापि प्रकारेण प्रमाणेन विशेषपदार्थः साधयितुं शक्यः सविशेषावादिभि : इति यदुक्तं अद्वैतिभिः तदपरं द्वैतवादिनः मध्वाचार्यः न क्षमन्ते इति ।

"तथाहि अस्माकमते भेदः वस्तुनः न स्वरूपमात्रं किन्तु अन्योऽन्याभावरूपः । स च अन्योऽन्याभावरूपः सविशेषघटादिवस्तुनः अभिन्नः एव स्वीक्रीयते ।अतः धर्मभेदपदार्थोक्त नानवस्थादिदोषप्राप्तिः, यतः भेद वस्तुनः पृथक् न मन्यते । भेदस्य प्रतिनिधिभूतः विशेष पदार्थः घटादौ तिष्ठति, अतः घटादिषु भेदस्वरूपतायाः विद्यमानेऽपि घटादिषु भेदपदस्यपर्यायिता घटादिपदेषु नास्ति, अतः विशेषपदार्थरव एकार्थकत्वापत्तिरूपायाःपर्यायितायाः वारणं करोति । स च विशेषपदार्थः केवलं भिन्नपदार्थेष्वेव न तिष्ठति , अपितु भेद रहित वस्तुष्वपि तिष्ठति । अस्माद्धेतोः एक्तरूपरिशेषापत्तिः वारकोभवति, अतः एवं भेदद्वयौ परस्परं अभिन्नत्वेऽपि स्व स्व व्यक्तित्वं पृथक् पृथक् स्थापयतः, स्व भेदः घटः एवं प्रकारेण व्यवहारवैलक्षण्यस्य निर्वाहको भवतः ।

यतःउक्त विशेष पदार्थे अपि प्रमाणम्, तस्य भवता अद्वैतवादिनाऽपि निराकरणं न कर्तुं शक्यते, यतः "विज्ञानमानन्दं ब्रह्म"[१] (बृह०उ०३।२८)

---

१- बृह०उ० ३।२८ ॥

इत्यादि वाक्यै: बोधितस्य विज्ञानानन्दत्वादे: भेदस्य भेदाभेदस्य स्वीकारे अखण्डार्थकत्वस्य तथा एकार्थवानुद्रष्टव्यम् अस्या: श्रुतेरपि विरोधोमवेत ,अतस्तत्र अपर्यत्वादे: सुरक्षायै: मम भेदप्रतिनिधिभूत: विशेष पदार्थ: अवश्यमेव स्वीकर्तव्य:,यत: तदङ्गीकारं विना पर्यायित्वापत्ते: वारणं न कर्तु शक्यते । एतदेव विशेषार्थप्रमापकं अर्थापत्तिप्रमाणम् ।

अपि च ज्ञानत्वमानन्दत्व मप्येकस्मिन्नाश्रय वर्तते,यत: अर्थप्रकाशस्वरुप ज्ञानत्वं अर्थप्रकाशरुपाश्रय विशेषं एवं निरुपाधिक (जन्येच्छानधीत) इच्छाया: विषयत्वरुपानन्दत्वनिरुपाधिकेष्टरुप: आश्रय विशेषमपेक्षते ।

किं च आकाश शब्दस्य शब्दाश्रय शब्दस्य च प्रकृति निमित्तं भिन्नं न भवति ।अत: तत्र पर्यायवाचित्वं प्रसज्येत । पर्यायवाचिनां शब्दानां सह प्रयोगो न भवति, तथा च लोके आकाश शब्दाश्रय: एवं विध: प्रयोगो न भवति , अत: पर्यायवाचित्वापत्ते: वारणाय विशेषपदार्थ: अभ्युपगन्तव्य: एव ।

अपि ज्ञानानन्दयो: स्वरुपत: अभेद एव तर्हिमोक्षावस्थायां ज्ञानानन्दयो: अन्यतरस्यैव परिशेषात् आनन्दस्य प्रकाश: ज्ञानं न स्यात्,तथा च अप्रकाशिते अज्ञाते सुखे न च पुरुषार्थत्वं घटते इति ।

किं च एकस्मिन्नेव वस्तुनि द्वौ विरोधिनौ धर्मौ स्थित्वा वस्तुन: अंशानां न भेद साधकौ,अतएव एकैव शुक्तिका स्वचाकचिक्यादिरुपसामान्यांशेन ज्ञाता एवं नीलपृष्ठत्वादि विशेषांशेन अज्ञाता भवति, यत: तस्या द्वयो: अंशयो: भेदोभवति । एवमेव एकमेव चैतन्य तत्वं चिदंशेन प्रकाशितं ऐश्यांशेनाप्रकाशितं तदेव भवितुमर्हति यदा चिदंशेन ऐक्यांशस्य भेदो भवेत्।

किं च एवं धर्मान् पृथक् पश्यन् इयं श्रुतिरपि चैतन्यतत्त्वेऽपि अंशभेदं साधयति,यत: इयं श्रुति: स्पष्टरूपेण चैतन्यस्य धर्मान् उल्लिख्य तद्भेदं निषेधति,अत:चैतन्यतत्त्वेऽपि भेदस्य प्रतिनिधि भूत: विशेषपदार्थ:स्वीकरण-मावश्यकम् ।यत: विशेष पदार्थं विना धर्मधर्मिभावं धर्माणामनेकत्वञ्च न सिद्ध्येत्।

अपि च उक्त श्रुति निषेध्यभूतधर्माणां अनुवादकं तदा करिष्यति, यदा तेषां धर्माणां प्राप्ति: प्रमाणान्तरेण भवेत् ,किन्तु नहि एवं विधं प्रमाणं किमपि सुलभं,अत: अगत्या इयमेव श्रुति: धर्माणां विधायिका तद्भेदानां निषेधिका च ।

किं च [1] गुणगुणिनो: अभेदपक्षेऽपि घस्य उपलम्भेऽपि घटात्मक शुक्लादिगुणानां अनुपलम्भापपत्यै विशेष: पदार्थ: अभ्युपगन्तव्य: एव । (२) एवंगुणगुणिनो: भेदाभेदपक्षेऽपि भेदाभेदाभेदयो: अविरोधत्वस्योपपत्ति:(३) गुणाऽणियो: अत्यन्त भेदपक्षे समवाय सम्बन्ध: सत्तासती,अत्यन्तविशेषो व्यावृत: कालसदास्ति देश:सर्वत्रस्ति इत्यादि अबाधित व्यवहाराणां निर्वाहाय मम विशेषपदार्थ: सर्वथा स्वीकरणीय: एव । (४) अभावोऽस्ति इत्यादित्यवहारै: सिद्ध अभावाधिगत अस्तित्वमपि अभावादि अधिकरणै: भिन्नं नाङ्गी कर्तव्यम् ।अन्यथा गुणादिष्वपि वर्तमानत्वात्,अस्तित्वगुणा-भिन्नं एवं सप्तममाजरूप पदार्थ: स्वीकरणीयो भविष्यति । तर्हि दिना भिन्नं एवं सप्तममाजरूप पदार्थ: स्वीकरणीयो भविष्यति । तर्हि, षडेव पदार्था: षडेव भावपदार्था अस्य नियमस्य भङ्गो भविष्यति । तर्हि, षडेव पदार्था: इत्येवं विधं नियमं न मन्यन्ते,तन्मतेऽपि अस्तित्वादिवृत्ति अस्तित्वादिपरम्परा अभ्युपगमेन अनवस्थात्वादि भविष्यति, एवं विधाया: अनवस्थाया: निवारक एकमात्रं मम सिद्धान्तसम्मत: एकं विशेष पदार्थ: स्वीकरणीय:,अन्यथा नान्या कापि गति: ।

---

[1] कठो० ४।१४ ॥

एवं हि वैशेषिकाभिमत अन्त्यविशेषपदार्थवत् कश्चित् धर्मिग्राहक प्रमाणेन मम-भिगत सम्मत: विशेषपदार्थ: सर्वानुपपत्तिवारक स्वभावसम्पन्न : स्वीक्रियते ।
एवं विशेषपदार्थ सिद्धौ अनुमानमपि प्रमाणमस्ति ।

विशेषपदार्थसाधकमनुमानम् :---

(१) ब्रह्मस्वरूपभूतयोर्विज्ञानानन्दयोर्ब्रह्मवेदयोश्च एकतरपरिशेषाभाव: , प्रमेयत्वादे: स्वाश्रितत्वादिकं वा भेदान्यनियम्यम् ,भेदानियम्यत्वेसति-नियम्यत्वाद्,यद्यदनियम्यत्वे सति नियम्यं तदन्यनियम्यं यथा सम्मतम् । अयं भाव: ब्रह्मस्वरूपभूतविज्ञानस्य एवमानन्दस्य,ब्रह्मण: तन्निष्ठाभेदस्य एकतर परिशेषताया: य: अभाव:, स अथवा प्रमेयत्वादौ यद् आत्माश्रितत्वं तत् भेदान्य: पदार्थद्वारा प्रयोज्यो भवति ,यत: भेदेनअप्रयोज्योभूत्वा य: प्रयोज्य:, एवं य: पदार्थ: येन वस्तुना अप्रयोज्योभूत्वा प्रयोज्यो भवति , स तद्वस्तुन: भिन्न पदार्थेन प्रयोज्यो भवति यथा यागादिना अप्रयोग्य:प्रयोज्य स्वभावक सुकर्गादियागेभिन्न अदृष्टादिना सम्पादितो भवति । (२) ब्रह्मस्वरूपभूतं विज्ञानानन्दादिकं वा भेदान्यैकतरापरिशेषानिर्वाहकवत् ,भेदहीनत्वेसति एकतरापरिशेष रूपनिर्वाह्यवत्वात् ।यथ द्धीनत्वेसति यन्निर्वाह्यवत,तत्तदन्यनिर्वाहकवद् ,यथा सम्मतम् ।अयं भाव: ब्रह्मस्वरूपभूतविज्ञानानन्दादि पदार्थ भेदात् भिन्नस्य कस्यापि एकतरापरिशेषता निर्वाहक विशेष पदार्थेन युक्ता: भवन्ति। यत: भेद राहित्येऽपि एकतरापरिशेषतारूपनिर्वाह्यस्याश्रय: अस्ति ।य:येन रहितो भूत्वा यस्य निर्वाह्यस्याश्रयो भवति स तद्भिन्नस्य कस्यापि निर्वाह कस्याश्रयो भवति, यथा अदाहकत्वरूपनिर्वाह्य धर्मेण युक्त: अग्नि:स्वभिन्न केनापि प्रतिबन्धकरूप निर्वाहकेन युक्तो भवति । (३) स्वाश्रितं प्रमेयत्वादिकं

वा भेदान्याश्रयाश्रयिभावनिर्वाहकवद् , भेदहीनत्वे सत्याश्रयाश्रयिभावरूप-निर्वाह्यवत्त्वात्,यद्धीनत्वे सति यन्निर्वाह्यवत् तत्तदन्यनिर्वाहकवद्,यथा संमतम् इति ।

अयं भाव: स्वाश्रितप्रमेयत्वादि भेदान्य कस्यापि आश्रयाश्रयत्व निर्वाहकपदार्थविशेषस्याश्रयो भवति यत: भेद रहितो भूत्वा आश्रयाश्रयत्वरूप-निर्वाह्यस्य आश्रयो अस्ति, यथा उभयसम्मतपदार्थ:इति,तस्मादेवं त्रिभिरनु-मानै: विशेष पदार्थ: सिद्ध्यति ।

:o:----------:o:

# षष्ठोऽध्याय:

## जीवस्वरूपविमर्श:

इह खलु संसारे नाना विधा: प्राणिन: समायान्ति दृष्टिगोचरतां, तत्र च केचन अत्यन्त सुखिन: केचन च अत्यन्त दु:खिन: केचन मध्यम सुखदु:खादि भाज: । प्राय: अहं सुखी अहं दु:खी अहं बद्ध: अहं मुक्त: इत्यादि लोक व्यवहार दर्शनेन एव तावत् प्रतीयते यत् एवं विध: कश्चन आत्मा वर्तते ।यत्र सर्वोऽपि सुखदु:खाद्यनुभवो जायते । स च आत्मा क: इत्ययं प्रश्न उदेति ।

'आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृ०२।४।५) इति मैत्रेयी ब्राह्मणे आत्मेतरेषु वित्तपुत्रादिषु गौणप्रियत्वं मुख्यमात्मान: संसाध्य परप्रेमास्पद भूतात्मदर्शनस्यैवामृतत्वसाधनत्वं 'येनाहममृतास्यां तदेव भगवान् ब्रवीतु' इति मैत्रेय्यानुयुक्तो याज्ञवल्क्यो ब्रह्मविद् वरिष्ठ उक्तवान् ।तत्र कीदृश आत्मा द्रष्टव्य: इति जायते जिज्ञासा ।

तत्र चार्वाका: -- वित्तपुत्रादिषु देहस्य प्रियत्वात्,अहं स्थूल: कृश इत्याद्यनुभवात् ,' स वा एष पुरुषोऽन्नरसमय:' (तै० ब्रह्मवल्ली १)इति श्रुतेश्च प्रत्यक्षसिद्धो चैतन्यविशिष्ट: देह एवात्मा । स एव द्रष्टव्य इति वदन्ति।

सौगतेषु विज्ञानवादिनस्तु -----

विज्ञानमवात्मा तत्त्व क्षणिकम् । तत्त्वञ्च द्वितीयक्षण ध्वंसप्रतियोगित्वम् ।घटादिकं सर्वं वहिरवभासमानं सर्वं विज्ञानमेव क्षणिकं वहिरर्थस्य

दुर्वचत्वात् । तथाहि तस्य परमाणुसमूहत्वे स्थौल्याद्यनुपपत्तिः अवयवित्वे नीलत्वानीलत्वादिपरस्परविरुद्धधर्माध्यासस्य भेदकस्य बाधकत्वम् घटाद्याकार-विशेषोऽपि विज्ञाने न वास्तवस्तस्य मिथ्यात्वात् । तच्च विज्ञानं द्विविधमा-लयविज्ञानं प्रवृत्तिविज्ञानश्चेति । अहमिति विज्ञानमालयं , द्वितीयं नीलपीत-घटाद्युल्लेखि ।प्रमाणप्रमितिप्रमातारोऽपि ज्ञानस्य कल्पिता आकाराः ।पूर्व-पूर्वविज्ञानादेवोत्तरोत्तरविज्ञानोत्पत्तिः । सर्वं विज्ञानं स्वविषयकं न तु ज्ञाना-न्तरविषयकम् । विज्ञानमेवानादिवासनावशात् नानाकारतया भासते ।तिसृ द्धदाणिकविज्ञानभावनया विशुद्धविज्ञानधाराप्रवेशो मोक्षः। एवं विज्ञानमेवा-त्मेति वदन्ति ।

माध्यमिकास्तु सौगताः :---

शून्यमेवात्मा । सुप्तोत्थितस्य न किञ्चिदवेदिषमिति परामर्शति । तत्रैव सुषुप्तौ सर्वशून्यतायां सर्वप्राणिप्रवृत्तिदर्शनात् सर्वप्रियत्वाच्च , असदेव सोम्येदमग्र आसीदित्यादि (छा०६।२।१) श्रुतेश्च । शून्यमभावः ।तस्मा-देव सर्वसांवृत्तिकजगदुत्पत्तिः ।शून्यभावनयैवा_महानरुपो मोक्षा इति वदन्ति ।

दिगम्बरास्तु ------

जैनमते आत्मानाणुर्नचमहान् ,किन्तु मध्यमपरिमाणवान् । देहेन्द्रियादिभ्यो व्यतिरिक्तो देहपरिणाम आत्मा यथा जलादिकं घटादिपात्रे निक्षिप्तं तदाकारता सम्पद्यते एवमात्मापि शरीरे तत्परिणामो भवति ।कञ्चु यथा वा कञ्चुकादिषु शरीरं प्रविष्टं तथात्मा देहः प्रविष्टः तदाकारा भवति।

एवं ह्रस्वतां दीर्घतां महत्त्वं वा प्रतिपद्यमानोऽपि नानित्यः परिणामभेदोऽपि द्रव्यस्यानाशात् । स चात्मा सततार्ध्वगमनशीलः कर्मपाशेन बद्धो न संसारकाले उर्ध्वं गच्छति । सम्यग् ज्ञानेन कर्मबन्धप्रहाणे सततोर्ध्वगतिं लभते । स एव मोक्षः।

वैशेषिक तार्किक प्राभाकरास्तु ------

देहेन्द्रियाद्यतिरिक्तः कर्ता भोक्ता विभुःजड़ आत्मा । स च ज्ञानगुणयोगाच्चचेतयः सुखदुःखादिसमवायी ज्ञानाधिकरणम् अहं जानामीत्याद्यनुभवति । सर्वमूर्तसंयोगित्वरुपं विभुत्वम् । तदभावे अणुपरिमाणत्वे देहव्याप्यभावात् युगपत्प्राप्तनानावयवगतदुःखादिवेदनं न स्यात् । प्रत्यक्षता च तस्य न स्यात् । प्रत्यक्षं प्रति महत्त्वस्य कारणत्वात् । साधर्म्यवैधर्म्याभ्यां देहाद्यतिरिक्तत्वेन तज्ज्ञानात् आत्यन्तिक सर्वदुःखोच्छेदो मोक्ष इति वदन्ति।

भाट्टास्तु :-----

तत्र स्वर्गकामो यजेत इत्यादि वाक्यप्रामाण्यात् कर्तृशास्त्रार्थवत्वात् इति सूत्र प्रामाण्याच्च शरीरेन्द्रियातिरिक्तं यागस्य फल भोक्तारं क्वचित् आत्मानं स्वीकुर्वन्ति । यतः अस्मिन् लोके कृताना यागादि कर्मणां यत् फलं स्वर्गादिकं तस्य च आमुष्मिकत्वात् । यश्च यागस्यकर्ता भोक्ता स एव तत्फल भोक्ता इति सर्वत्रैव दृश्यते,नहि अन्यः कर्ता अन्यश्च भोक्ता लोके दृश्यते। अतः देहेन्द्रियादि व्यतिरिक्तः आत्मा कश्चन् अभ्युपेतव्यः अस्मिन् मीमांसा दर्शने द्वैव प्रसिद्धो आचार्यो विद्येते तत्र कुमारिल भट्टः प्राभकराश्च । अनयोः मतानुसारेण प्रसिद्धः भट्ट सम्प्रदायः प्राभाकरसम्प्रदायश्च । प्राभाकरमते आत्मा

देहेन्द्रियादिभ्यो भिन्नः कर्ता भोक्ता विभुः जड आत्मा ।किन्तु भाट्टमते प्राभाकरमतात् किमपि विलक्षणं आत्मस्वरूपम् । भट्टमते जडो बोधात्मक आत्मा ।तस्यास्ति अंश द्वयम् । चिदंशे न द्रष्टृत्वम् । अचिदंशेन ज्ञानसुखादि-परिणामित्वमिति वदन्ति ।

सांख्याः पातञ्जलाश्च :---

जनन मरणकरणाद् अयुगपद् प्रवृत्तेश्च पुरुष बहुत्व सिद्धं इत्यनया ईश्वरकृष्णकारिकया पुरुषस्य बहुत्वमेव प्रतिपादितम् । स च सांख्योक्तपुरुषः निर्गुणः चेतनः अकर्ता उदासीनः इति । एतेषां मते अचेतनं प्रधानमेव जगतः कारणम् । अचेतन बुद्ध्यादिकं चेतन सान्निध्यात् चेतनवदिव भूत्वाकरोति इति बुद्ध्यादेरेव कर्तृत्वम्, न पुरुषे । पुरुषे प्रतीयमानं कर्तृत्वं त्वौपाधिकमित्यवगन्तव्यम् । अतो वस्तुतः पुरुषस्त्वकर्तैव । उक्तं च ---

अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः ।
अकर्ता निर्गुणः सूक्ष्म आत्मा कपिलदर्शने ।।

एवं महर्षिणा कपिलेनापि उपरागात् कर्तृत्वं चित्सान्निध्याच्चित् सन्निध्यात् इति सूत्रेणापि द्वयमेव आशयं प्रकटीकृतवान् ।सांख्योक्त पुरुषः दात्रिगुणत्वविवेकित्वाविषयत्वासामान्यत्व चेतनत्वाप्रसवधर्मित्वा-हेतुमत्त्वनित्यत्व व्यापकत्व साक्षित्व कैवल्यत्व माध्यस्थत्वौदासीनत्व -द्रष्टृत्वाकर्तृत्वादिधर्मवानित्यवगम्यते । एवं सांख्योक्त पुरुषः साक्षी द्रष्टा चेतनश्च इत्यङ्गीकारात् चिद्रूप एव । एवं नैयायिकाः वैशेषिकाः प्राभाकरादयश्च आत्मानं नित्यं विभुं प्रतिशरीरं भिन्नमिति स्वीकुर्वन्ति । किन्तु

आत्मनः चिद्रूपत्वं नाङ्गीकुर्वन्ति । किन्तु तेषां मते आत्मा जड़ द्रव्यम् । मनसासंयोगे सति ज्ञानमुत्पद्यते इतिज्ञानात्मनो गुणगुणिभावमङ्गीकुर्वन्ति ते। सांख्ययोगदर्शनयोः पुरुषस्य निर्गुणत्वस्वीकारान्नहि ज्ञानं पुरुषस्य गुणः किन्तु ज्ञान रुपं एव । निर्गुण वादः न कश्चिद् धर्मः[1] इति महर्षिणा कपिलेन ज्ञानपुरुषयोर्गुणादणिभावो प्रत्याख्यातः । एतेषां मते पुरुषस्य चिद्रूपः किन्तु नानन्दरुपः ।एवं ---

संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तिश्च[2] ।।

इत्यादि प्रन्चभिर्हेतुभिः पुरुषं साधयन्ति । अस्मिन् दर्शने त्रिविध दुःखात्यन्तनिवृत्तिरेव कैवल्यमुच्यते ।

अद्वैतवादिनस्तु ------

अद्वैत एकमेव शुद्धं सच्चिदानन्दस्वरुपं पारमार्थिकं व्यापक एवं विधमात्मानं स्वीकृत्य तत्रैव उपाधिवशात् सर्व मपि नामरुपात्मकं जगद् वैचित्र्यमुपलभ्यते,तदुपाधिश्च मायैव । अत्र विषये मतद्वयं प्रसिद्धमुपलभ्यते ।एकं मतं विवरणाचार्याणां अपरं च वाचस्पतिमिश्र महाभागानां तत्र विवरणाचार्याणां अपरं च वाचस्पतिमिश्र महाभागानां तत्र विवरणकारमते अविद्यायाः आश्रयस्तु शुद्धं ब्रह्मैव तथाहि यथा -----

---

१- सां०सू० १।१।४६ ।।
२- सांख्य का० १७ ।।

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेवकेवला ।
पूर्वसिद्ध तमसो हि पश्चिमोनाश्रयो भवति नापि गोचर: ।।इति

तत्र अखण्डं चैतन्यमेव अविद्याया: आश्रयो विषयोऽपि यत: पूर्वसिद्धस्याज्ञानस्य पश्चाद् भावीजीव: नाप्याश्रयो नापि विषयो एव वाचस्पति मिश्र मते तु जीवाश्रितवाविद्या ब्रह्म विषयिणी । अन्योन्याश्रय परिहारस्तु अनादित्वात् कर्तव्य: । अद्वैत वेदान्ते ------

जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योग: षडस्माकमनादय: ।।

इत्येवं षण्णां अनादित्वमभ्युपगम्यते ।अनादित्वन्च प्रागभावा प्रतियोगित्वं एवं वार्तिक कृद्भि: सुरेश्वराचार्यै: आभासवाद: वाचस्पत मिश्रैश्च अवच्छेद वादो स्वीकृत: । एवं प्रकारेण वेदान्त शास्त्रे प्रस्थानत्रयं नितान्तं प्रसिद्धम् ।एवं त्रिष्वपि स्थानेषु परस्परं विरोधस्य प्रतीयमानेऽपि चरम तात्पर्ये एतेषामाचार्याणां परस्परं वैमत्यं नास्ति,यत: शास्त्रेषु प्रक्रिया भेदैरविद्या च ।

यया यया भवेत्पुंसा व्युत्पत्ति: प्रत्यगात्मनि ।
सा चैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता ।।इति।।

इत्यादि श्रुत्युक्ती: सर्वे विवादा: शास्त्र सम्मता एव ।

आभासवाद: ----

तत्र "स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति वाद आभास वादः"[1] इत्येवंगौड़ ब्रह्मानन्द स्वामिनः आभासवादस्य लक्षणं उक्तवन्तः । एवं आभास वादे जीवः परमात्मनः आभास एव सम्पद्यते । उक्तञ्च भगवत्पूज्यपादैःशङ्करा चार्यैः "आभास एव चैष जीवः परस्यात्मनः जलसूर्यकादिवत् प्रतिपत्तव्यः"[2] इति । एवं "जीवेशावाभासेन करोति माया चा विद्या च स्वयमेव भवति"[3] इयं श्रुतिरपि आभासवादे प्रमाणम् । अनया श्रुत्या शुद्धतत्वमाश्रिताऽनिर्वचनीया, शुद्धसत्त्वगुणप्रधानतया मायेति, मलिनसत्वगुणप्रधानतया ,विद्येत्युच्यते । एवं मायायां प्रतिफलितश्चिदाभासो तां मायां वशीकृत्य ईश्वरो भवति । एवमवि- द्यायां प्रतिफलितः अविद्या वशीभूतः चिदाभासः जीवः इति उच्यते । उक्तं च प्रन्चदश्यां विद्यारण्य स्वामिना ----

सत्त्वशुद्धि विशुद्धिम्यां मायाऽविद्ये च ते मते ।
माया विम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः ।।
अविद्या वशगस्त्वन्यस्तद्वैचित्र्यादनेकधा[4] ।। इति ।।

---

१- न्या०र०,पृ० -८६ ।।
२- ब्र०सू०शा० भा० २।३।५० ।।
३- नृसिंहो ९ खण्डे ।।
४- पन्च० १।१६।१७ ।।

यथा लोके एकस्यैवाकाशस्य महाकाशः, घटाकाशः, मेघाकाशः जलाकाश इति भेदेन चतुर्धा भवति, एवमेव एकस्यैव चैतन्यस्य ब्रह्मचैतन्यं कूटस्थ चैतन्यं ईश्वर चैतन्यं जीव चैतन्यश्च इत्थेवं चातुर्विध्यम् । तदुक्तम् ----

कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ।
घटाकाशो महाकाशो जलाकाशाभ्रखे यथा [1] ।।इति ।।

अत्रेदं बोध्यम् - स्थूलसूक्ष्मशरीरयोरधिष्ठानभूतं चैतन्यं कूटस्थम्[2], निरवच्छिन्न चैतन्यं ब्रह्म, मेघस्थजलकणेष्विव बुद्धिवासनाविशिष्टमायायां प्रतिबिम्ब ईश्वरः[3], शरीररूप घटे बुद्धिरूपजले यश्चैतन्यस्य प्रतिबिम्ब सजीव[4] प्रतिशरीरं बुद्धीनां वैचित्र्यात् तद्गतचिदाभासस्यापि भेदः । एवं जीवभेदेनैव सुखदुःखयोर्व्यवस्थोपपत्तिः । एवं उक्त नियमानुसारेण आभासस्यापि मिथ्यात्वमेवाभ्युपगन्तव्यम् । उक्तं च म मधुसूदनसरस्वतीभिः -" आभासस्यापि जड़ाजड़विलक्षणत्वेनानिर्वचनीयत्वमिति[5] । एवं विद्यारण्यस्वामिभिरपि" आभासत्वस्य मिथ्यात्वात्[6] इति "मायिकोऽयं चिदाभासः"[7] इति ।

---

१- पञ्च० ६। १८ ।।
२- पञ्च० ६।२२ ।।
३- पञ्च० ६।१५६-१५८ ।।
४- पञ्च० ६।२३ ।।
५- सि०बि०,पृ० ८८ ।।
६- पञ्च० ७।१५ ।।
७- पञ्च ७।२१७ ।।

कर्तृत्वादीन् बुद्धिधर्मान् स्फूर्त्याख्यान्वात्मरूपताम् ।
दधद्विभाति पुरत आभासोऽतो भ्रमो भवेत् ।।[1]

इत्यैव क्रमेण सर्वैश्चिदाभासस्य मिथ्यात्वं मायिकत्वञ्च बहुविधं प्रपञ्चितम् । एवमेव विवरणाचार्यं सम्मतं प्रतिबिम्बवादोऽपि विचारणीयः ,।

प्रतिबिम्बवादः :----

तत्र प्रतिबिम्बवादस्य इदं तावल्लक्षणं ब्रह्मानन्दस्वामिना स्वकीय ग्रन्थे कृतमस्ति,यत् स्वरूपतः सत्यं प्रतिबिम्बत्वरूपेण मिथ्याभूतं बिम्बमेव प्रतिबिम्बमिति वादस्य प्रतिबिम्बवादत्वम् एवंप्रतिबिम्बलक्षणं तु उपाध्यन्तर्गतत्वेप्रतीयमानत्वे सत्योपाधिकपरिच्छेदशून्यत्वे च सति बहिः । स्थित स्वरूपत्वं प्रतिबिम्बत्वम्[2] । बिम्बत्वञ्च उपाध्ययनन्तर्गतत्वे सत्युपाध्यन्तर्गतस्वरूपाभिन्नत्वमिति[3], बिम्बप्रतिबिम्बयोर्लक्षणं प्रतिपादितम् । एवमान्तः करणभिन्नत्वेनैव जीवस्यभिन्नत्वम् । एवं जीवेश्वरयोः एकमेव उपाधिभूतमज्ञानं तन्निमित्तमेव ईश्वरस्य ईश्वरत्वं जीवस्य जीवत्वम् । उक्तं च ईश्वरत्व जीवत्वं उपाधिद्वयकल्पितम् । ईश्वरस्यापाधि माया जीवस्योपाधिरविद्या । यद्यपि ईश्वरयापि उपाधिः मायैव तथापि मायारूपोपाधि कृता दोषाः ईश्वरं नायन्ति,किन्तु

---

1- पञ्च ८।५२ ।।
2- जी०द० ४।६३ ।।
3- अब्र०सि०,पृ० २०२ ।।

जीवे एक उपाधेः प्रतिबिम्बपक्षपातित्वात् । यथा स्वान्तर्गतत्वं मलिनत्वादिकं दर्पणो एव न तु बिम्बभूते मुखे, एवमेव पूर्णानन्दो नास्तिः न भाति इत्यादि व्यवहारं अविद्या प्रतिबिम्बे जीवे एव जनयति न तु बिम्बभूते ईश्वरे । अतः जीवः एव प्रतिबिम्बः न ईश्वरः ।[1] लोके तावत् तत्त्वमस्यादिवाक्येन लक्षणया जीवेश्वरयोर्भेदस्य बाधितत्वात् । लोके प्रतिबिम्बस्य भ्रमत्वेऽपि मदीयं मुखमिति प्रत्यभिज्ञा भवति । यथा इदं रजतमित्यत्र प्रतीयमानं यद्रजतं मिथ्यैव, नेदं रजतमिति ज्ञानेन रजतस्य बाध्यत्वात्, तथा अत्र मदीयं मुखमित्यत्र नेदं मुखं इत्येवं न स्वरूपस्य बाधः । किन्तु मात्रमुखमिति देशसम्बन्धमात्रस्यैव बाधः । अतः मदीयमिदं मुखमित्यादि ऐक्य प्रत्यभिज्ञायाः न भ्रमत्वा सिद्धिः । एवं उपाधिभूतस्याज्ञान नाशं सति बिम्बभूतचैतन्यमेवावशिष्यते ।

अतएव उक्तम् ----

> विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने ।
> आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ।।

एवं ----

'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः'[2] इत्यस्मिन् पक्षोऽपि मायायां प्रतिबिम्बः ईश्वरः अन्तः करणे प्रतिबिम्बो जीवः इत्येव

---

1- अ०ब्र०सि०, पृ० - २०२ ।।

2- त्रि०म०ना० ४।८ ।।

प्रतिबिम्ब वादः एव समर्थयति । एवं विवरणाचार्यैः प्रतिबिम्बवादस्य समर्थनं महतायासेन कृतम् ,तत्र वाचस्पतिमिश्राः इत्थं वदन्ति गन्धरूपरसादीनां किदृशी प्रतिबिम्बता इत्येवमतमनुश्रित्य निरुपस्य ब्रह्मणः प्रतिबिम्बासंभवः इत्युक्त्वा घटाकाशादिदृष्टान्तेन अवच्छेदनादस्य दृष्टान्तरूपेण प्रतिपादनं कृतवन्तः ।

अवच्छेदवादः :---

वाचस्पति मिश्रमते, तु अविद्या जीवाश्रिता न ब्रह्माश्रिता,जीवाश्रिताऽपि अविद्या ब्रह्मविषायिणी अतः एतन्मते अज्ञान विषायीकृतं चैतन्यमीश्वरः अज्ञानाश्रयीभूतं च जीवः इत्येवं क्रमेण तयोः स्वरुपं विवेचितम् । एवमविद्यायाः आश्रयो द्विविधो भवति -एकोऽध्यासेन,अपरश्चाच्छादत्वेन । आध्यासिक सम्बन्धेन अविद्यायाश्रयो ब्रह्मैव । किन्त्वाच्छादयतासम्बन्धेन नहि ब्रह्मणि अविद्या तिष्ठति ,ब्रह्मणः स्वप्रकाशत्वात् । अतएव जीवे एव अविद्या आच्छादयता सम्बन्धेन तिष्ठति । अतएव अविद्यायां अभानापादकत्वमसत्त्वापादकत्वं च द्वैविध्यमुपपद्यते ।

एवं नीरुपस्य परब्रह्मणः प्रतिबिम्बस्यासंगवात् अन्तःकरणावच्छिन्नं चैतन्यमेव जीवः अनवच्छिन्नं चैतन्यमीश्वरः ,इत्यवच्छेदवादिनां मतम् । अतएवजीवएव स्वात्मांशे कर्तृत्व भोक्तृत्वादिकं कार्यकरणादिकं संसारित्वं सर्वानर्थ संभारान् च आत्मनि आरोप्य अहं कर्ता अहं भोक्ता अहं सुखी,अहं दुःखी , इत्यादि व्यवहारं जनयति । अतः भगवत्पूज्यपादैः शंकराचार्यैरपि --

"सत्यमेवैतत् परस्वात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते । यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते तद्वत्"[1] इत्यवच्छेदवादः सम्यग्रूपेण प्रतिपादितः ।अतएव उक्तं गौडपादकारिकायाम् ---

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तथा जीवो नभोपमः[2] ।।इति ।।

वचनमनुसृत्य सर्वगतमपि चैतन्यमन्तःकरणेन अवच्छिन्नं एवं अन्तःकरणावच्छिन्नो अविद्यावच्छिन्नो वा जीव इति आचार्य वाचस्पतिमिश्रेभ्यो ऽवच्छेदपक्ष एव रोचते । एवं च अस्मिन् पक्षेऽज्ञाननानात्वाद् जीवनानात्वम् ।स्वाज्ञानोपहिततया जगदुपादानत्वादिकस्य तत्त्वज्ञाने नापरस्य प्रपञ्चानुच्छेद इति प्रपञ्चभेदोऽत्र प्रस्तूयते । ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारात् अयमेववावच्छेदवादः ।

एवमन्तःकरणाऽवच्छिन्नत्वस्य जीवत्वे कर्मोत्तसमयास्तत्र तत्रान्तःकरणावच्छेद्यचैतन्यप्रदेशस्य भिन्नत्वात् कृतहानाकृताभ्यागमप्रसङ्गेण इति अवच्छेदमात्राज्जीवत्वस्वीकारे घटावच्छिन्नस्यापि जीवत्वं प्रसज्येत,अन्तःकरणस्य स्वच्छत्वात् तदवच्छिन्नस्यैव जीवत्वमिति चेत् परिच्छेदे स्वच्छत्वा-

---

१- त्रि०भा०ना० ४।८ ।।

स्वच्छत्वकृतविशेषानुपपत्तेः,प्रतिबिम्बग्राहित्वमात्रविशेषोपलब्धिस्वीकारे ह-ठात् प्रतिबिम्बवादस्वीकारापत्तिश्चेत्यालोचका अस्मिन्नप्यरुचिं प्रदर्शयन्ति ।

वस्तुतस्तु प्रतिबिम्बवादे,अवच्छेदवादे,आभासवादे वा नाद्वैतिना-मत्यन्तमाग्रहः तेषां बालबोधनार्थत्वात् । किन्तु यथा किञ्चिद्विकारमन्तरेण कुन्तीपुत्रेऽज्ञानवशाद् राधापुत्रत्व भ्रमः ,तथा ब्रह्मैव किञ्चिद्विकारं विनाऽवि-द्या ऽनाद्यविद्यावशाज्जीवभावमापन्नंसद् विवेकेन मुच्यत इत्येव परमार्थः । तदुक्तं बृहदारण्यकभाष्ये पूज्यपादैः शङ्कराचार्यैः -"ब्रह्मैव स्वाविद्यया संसरति,स्ववि-द्यया मुच्यते च"इति । वार्तिककारैरप्युक्तम् ----

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ।।इति

अयमेव एकजीववादाख्यः मुख्यो वेदान्त पक्षः ।

एवं अवस्थात्रयवत्वं जीवत्वम् ।अतएव जीवस्यैव तिस्रः अवस्थाः जाग्रद् स्वप्न सुषुप्तादयः भवन्ति,न ईश्वरस्य । एवमपि जीवस्य त्रैविध्यमुपचर्यते स्वोपाध्यवान्तर भेदेन विश्वतैजस प्राज्ञ भेदात् ।तत्र अविद्यान्तःकरणस्थूलशरी-राभिमानरहित उपाधिद्वयोपहितः स्वप्नाभिमानी तैजसः । शरीरान्तः कर-णोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्या-भिमानी प्राज्ञः । एवमेव पञ्चदश्यामपि इदं तावत् जीवस्वरूपं वर्णितम् ---

चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः ।
चिच्छाया लिङ्गदेहस्था तत्सङ्घो जीव उच्यते ।।

अस्यायमर्थः -- यदधिष्ठानं लिङ्गदेहकल्पनायाऽमूतं यच्चैत न्यमस्ति,यश्च तत्र कल्पितो लिङ्गदेहः,यश्च तस्मिन् लिङ्ग देहे वर्तमानश्चिदाभासस्तत्सङ्घः , तेषां त्रयाणां समूहो जीवशब्देनोच्यत इत्यर्थः। तत्र तावदयं जीवः प्रतिबिम्बः आभासो वा भवेत् , किन्तु स जीवः किम् परिमाणः ? इत्येवं तावत् अत्र विचारणीयो विषयः यत् अयमात्मा केवल निर्गुणः निराकारः अद्वितीय,निरवच्छिन्नएव श्रुत्या बोध्यते न वास्यात्मन : अणु परिमाणत्वं यतः आत्मनः व्यापकत्वात् यतः अणुवादे बहवः दोषाः समायान्ति । अतः दोषानवकाशात् व्यापक पक्षः एव आद्रीयते,तथा च अस्मिन् पक्षे स वा एषा महानज सर्वगतश्च नित्यः इत्यादि श्रुतिभिः जीवस्याणुत्वं निषिध्यते तु अस्थूलमनण्वह्रस्वमदीर्घम् (बृ०३।४।८) न च परः एव आत्मा बोध्यते,आभिः श्रुतिभिरिति युक्तं जीवब्रह्मणोरभेदात् न च साक्षादणुत्वबाधिका श्रुतयः उपरुध्येरन् इति वाच्यम् ,तासां श्रुतीनां बुद्ध्याद्युपाधिगुणेनाणुत्वव्यपदेश तात्पर्यस्यावधारणात् । श्रूयते च बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः अत्र बुद्धिगुणेन आत्मगुणेन - शरीरगुणेन वा आराग्रमात्रतां दर्शयति । अथवा बुद्धिगुणेन तद्धर्माध्यासेनाराग्रमात्रताम् अणुत्वम्,आत्मगुणेन देहधर्माध्यासेन च अवरतां परिच्छिन्नतां दर्शयति श्रुतिः न तु स्वेनैव अणुर्वा ब्रह्मणोऽवरो वा जीव इति । एवन्चाणुत्वं ब्रह्मभेदश्चेत्युभयमौपाधिकमेव । स्वतोऽपरिच्छिन्नस्यैकस्य व्यापकस्यात्मनो बुद्ध्यादिगुणोपाधिवशाद् घटमणिकमल्लिकादिवशादाकाशस्येव परिच्छिन्नत्वादिव्यपदेशः सिद्ध्यति,अथवा अवरोऽपि न विद्यते परः श्रेष्ठः परःयस्मात् स असावपरिच्छिन्नोऽपि बुद्ध्यादि गुणोपाधिना दृष्टो व्यपदिश्यते इत्यर्थः।अतएव श्रूयते -----

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः सविज्ञेयः स चानन्त्याय कल्पते ।।इति ।।

अत्र स्वतो व्यापकस्य बालाग्रशतभागशतधा कल्पितस्येत्युक्तम् । न तु स्वत एव तथा । कल्पना चोपाधिभिरेव भवति । स्फुटमेव श्रुत्या कल्पिताणुत्वमुच्यते जीवस्य । ननु कथं कल्पनमिति चेत् आनन्त्याय,अनन्तभावं ब्रह्मात्मतां प्राप्तुमित्यर्थः । परमार्थतः स्वतोऽनन्तस्यापि जीवस्य आनन्त्यावाप्तिः ग्रैवेयकादिप्राप्तिवद् बोध्या । अन्यथा परमार्थतोऽणोरात्मनः कथमनन्तत्वप्राप्तिः स्यात् ।

न च भगवत् प्रपत्तिरेवाणोरपि जीवस्यानन्त्यप्राप्तिरिति वाच्यम्,तथा सति भावप्रधाननिर्देशोऽसंगतः स्यात् ,अनन्तं प्राप्नुयादित्युच्येत । न चानन्त्याय अविनाशयित्वयर्थोऽत्र युक्तः,जीवस्यापि अविनाशित्वात् ,श्रुतेरनुवादकत्वप्रसङ्गात् । यदि च पूर्वोक्तरीत्या प्राप्तिप्रापणमेवात्र बोध्यते अविनाशित्वस्येत्युच्यते तदा आनन्त्यायेत्यस्यापरिच्छिन्नत्वायमहत्त्वायेत्यर्थोऽपि मदुक्तो युक्त एव । महत्त्वबोधकश्रुत्यनुरोधात् । न चानन्त्यमेवौपचारिकम् । उपपादितञ्चैतद् औपाधिकमणुत्वं जीवात्मनः श्रीशङ्करभगवत्पादैः 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'[१] इति सूत्रे भाष्ये ।तथाहि - तस्याः बुद्धेर्गुणाः सुखदुःखादयः सारः प्रधानं यस्यात्मनस्तत्त्वात् तद्व्यपदेशः कर्तृत्वसुखित्वदुःखित्वादिव्यपदेशो न तु विभोरात्मनः स्वगुणेन ।

एवञ्च सति बुद्धिगुणेनैव परिच्छिन्नवदाभासमानस्यात्मन उत्क्रान्त्यादयोऽपि सुतरामुपपद्यन्ते । यथा घटे नीयमाने तदवच्छिन्नाकाशोऽनीयमा-

---

१ ब्र० २।३। २९ ॥

अत स्वतो व्यापकस्य बालाग्रशतभागशतधा कल्पितस्येत्युक्तम् । न तु स्वत एव तथा । कल्पना चोपाधिभिरेव भवति । स्फुटमेव श्रुत्या कल्-पताणुत्वमुच्यते जीवस्य । ननु कथं कल्पनमिति चेत् आनन्त्याय,अनन्तभावं ब्रह्मात्मतां प्राप्तुमित्यर्थः । परमार्थतः स्वतोऽनन्तस्यापि जीवस्य आनन्त्यावाप्तिः ग्रैवेयकादिप्राप्तिवद् बोध्या । अन्यथा परमार्थतोऽणोरात्मनः कथमनन्तत्वप्राप्तिः स्यात् ।

न च भगवत् प्रपत्तिरेवाणोरपि जीवस्यानन्त्यप्राप्तिरिति वाच्यम्,तथा सति भावप्रधाननिर्देशोऽसंगतः स्यात् ,अनन्तं प्राप्नुयादित्युच्येत । न चानन्त्याय अविनाशायेत्यर्थोऽत्र युक्तः,जीवस्यापि अविनाशित्वात् ,श्रुतेरनुवादकत्वप्रसङ्गात् । यदि च पूर्वोक्तरीत्या प्राप्तिप्रापणमेवात्र बोध्यते अविनाशित्वस्येत्युच्यते तदा आनन्त्येत्यस्यापरिच्छिन्नत्वायमहत्त्वायेत्यर्थोऽपि मदुक्तो युक्त एव । महत्त्वबोधकश्रुत्यनुरोधात् । न चानन्त्यमवौपचारिकम् । उपपादितञ्चैतद् औपाधिकमणुत्वं जीवात्मनः श्रीशङ्करभगवत्पादैः 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'[1] इति सूत्रे भाष्ये ।तथाहि - तस्याः बुद्धेर्गुणाः सुखदुःखादयः सारः प्रधानं यस्यात्मनस्तत्त्वात् तद्व्यपदेशः कर्तृत्वसुखित्वदुःखित्वादिव्यपदेशो न तु विभोरात्मनः स्वगुणेन ।

एवञ्च सति बुद्धिगुणेनैव परिच्छिन्नवदाभासमानस्यात्मन उत्क्रान्त्यादयोऽपि सुतरामुपपद्यन्ते । यथा घटे नीयमाने तदवच्छिन्नाकाशोऽनीयमा-

---

१- ब्र० २।३। २९ ॥

नोऽपि तथा व्यपदेशमाक्,तथा बुद्ध्यादिलिङ्गस्य उत्क्रमणे गतौ आगतौ वा अपरिच्छिन्नस्यापि जीवात्मन उत्क्रान्त्यादिव्यपदेश: । यावदात्मदर्शनं बुद्ध्यादिगुणयोगस्य सत्त्वात् जीवस्य संसारित्वं न निवर्तते । आत्मनिश्चयात्तु निवर्तते । स च बुद्धियोग: सुषुप्तिप्रलययो: शक्त्यात्मना सन्नपि निद्रादिप्रतिबन्धनात् नाभिव्यज्यते प्रबोधे प्रसवे चाभिव्यज्यते पुंस्त्वादिवत् । बुद्धिरन्त: करणम् ।अदृष्टपरिपाककादाचित्कत्वात् शक्तिप्रतिबन्धाद् वा विभोरप्यात्मनोऽन्त: करणस्य नित्यं सन्निधानेऽपि न नित्योपलब्ध्यनुपलब्धी प्रसज्येते ।

न चान्त:करणमेव तर्हि व्यर्थम्,इन्द्रियविषयात्मसन्निधानाद् वस्तूपलब्धि:,असन्निधानात् शक्तिप्रतिबन्धाद् वा अनुपलब्धिरुपपन्नेति वाच्यम्, श्रुतियुक्तिभिरन्त:करणस्योपपन्नत्वात् प्रामाणिकत्वाच्च । तथाहि आत्मनोऽविक्रियत्वात् शक्तिप्रतिबन्धो न युज्यते । निर्धर्मकत्वाच्चात्मन: शक्तिरूपधर्मस्याभावात् । नापीन्द्रियस्य शक्ति प्रतिबन्धो युज्यते । तस्माद् विषयेन्द्रियादिसंनिधानेऽपि यस्यावधानानवधानाभ्यामुपलब्धिरनुपलब्धिश्च भवत:,तन्मनोऽवश्यमभ्युपगन्तव्यम् । अनभ्युपगते हि मनसि युगपदेव कार्यत्नब्धिरपि प्रसज्येत् । श्रुतिरपि मन: सद्भावं वदन्ती तस्य प्रतीन्द्रियमुपयोगं निर्वक्ति मनसा ह्येव पश्यति मनसा शृणोति[1] । न चान्त:करणस्य वैयर्थ्यम,तदनङ्गीकारे विषयेन्द्रियात्मनां संयोगे सति असति मनसि नित्यमेव उपलब्धिरनुपलब्धिर्वा स्यात् ।अत: मन: अवश्यं स्वीकरणीयम् ।आत्मनोऽणुत्ववादिनापि अन्त:करणं अभ्युपगन्तव्यमेव

---

१- बृ० १।५।३ ।।

युगपदनेकज्ञानान्यथानुपपत्त्या नित्योपलब्धि अनुपलब्ध्यान्यथानुपपत्त्या च एवं तद्गुणमादायैव उत्क्रान्त्यगत्यादीनामोत्पत्तौ जीवात्मनोऽणुत्वे न किञ्चिद् प्रमाणम् । अतएव, अद्वैतसिद्धि ग्रन्थस्य मंगलाचरणे विष्णुर्विकल्पोज्झितः इत्युक्तम् । चन्द्रिकाकृद्भिः विष्णुरित्यस्य व्यापकं जीवस्वरूपं इत्येव व्याख्यानं कृतम् अतः जीवः व्यापकः एव नाणुरिति । जीवस्याणुत्व पक्षे सकलशरीर व्यापि वेदनानोपपद्येत सकलशरीरव्याप्त्यभावात् ।

ननु सकलशरीरव्यापित्वक्सम्बन्धाद्वुपपद्यते इति चेत् तर्हि एकदेशे कण्टकतोदनेऽपि सकलशरीरगतवेदनाप्रसज्येत । न च मन्दाकिनीशीतजलावगाहन जन्यसर्वशरीरव्यापिशैत्योपलब्धिवत् कण्टकतोदने सर्वव्यापि वेदनानुभूयते । चन्दनबिन्दुवत् तुल्यं दृष्टान्तोऽपि विषमः । चन्दनस्य सावयवत्वा दवयवसंचारेण कथंचिद् व्याप्तिसम्भवेऽपि निरवयवस्यात्मनस्तथाऽसम्भवान्नहि जीवात्मनः सावयवत्वे प्रमाणमस्ति । तथा सति तस्यानित्यत्वादुत्पत्तिविनाशौ ध्रुवं प्रसज्येयाताम् ।

नचतस्योत्पत्तिविनाशौ श्रूयते । "नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः"[1] इति सूत्रे तदुत्पत्तिराक्षिप्ता । अविकृत एवात्मा अन्तः करणोपाधिपरिवेशान्जीवत्वमापन्न इति युक्तम् । शरीरैकदेशवर्ति चन्दनगन्धो गुणः सर्वशरीर व्यापीति न युक्तम् । न हि गुणो गुणिनं विहायान्यत्र सम्भवति न युक्तम् । न हि गुणो गुणिनं विहायान्यत्र सम्भवति । अन्यथा घटरूपमपि घटव्यतिरेकिणोपलभ्येत अत्र प्रदीपप्रभावदिति दृष्टान्तोऽपि न समीचीनः । नहि प्रदीपस्य प्रभा प्रदीपगुणः अपितु द्रव्यमेव तत् । सा संकोचविकासशालिनी प्रभा प्रदीपाद् निर्गा-

---

१- ब्रह्म) २।३।१७ ॥

यवतेजसो भिन्नमेव द्रव्यं प्रविरलावयवं तेजो न गुण: । न च तत्रापि दृष्टान्तता युज्यतेति वाच्यम्, दार्ष्टान्ते तदसम्भवात् । न हि जीवस्य चैतन्यं गुण:, चैतन्यस्य जीवरूपत्वात् । नहि चैतन्यं जीवाद् भिन्नमस्ति । न च जीवस्य ज्ञानरूपत्वे नहि विज्ञातुर्विज्ञातेर्विपरिलोप इत्यादि श्रुतिविरोधः इति वाच्यम्, तस्याः अपि श्रुतेस्तद्गुणसारत्वेनोपपत्ते: । प्रतिबोधविदितं मतमित्यादिनाप्रतिवृत्तिचैतन्योपलब्धे: प्रतिपादितत्वात् । किन्त, विज्ञातुर्विज्ञातेरित्यत्र विज्ञात्रभिन्नविज्ञातेर्विज्ञात्यभिन्नाविज्ञातुरिति वार्थस्य सम्भवात् । "राहोशिर:" इत्यादिवद् भेदे अपि षाष्ठीश्रवणात् ।

किन्चात्मनोऽणुत्वे तावदिन्द्रिय युक्तमनसा सह तद्विषयेषु शीघ्रगमनशालित्वं मन्तव्यम् । अन्यथा नेत्रेषु संयुक्त: श्रोत्रयो: संयोगाभावरूपो यत्नविघ्नं स्यात् । गमनशालित्वे च बलत्वादनित्यत्वापत्ति: स्यात् । हृदिस्थत्वे तस्य सर्वेन्द्रियविषयादिसंयोगाभावाद्रूपादेरनुपलब्धिप्रसङ्गात् । गुणव्याप्तिपक्षस्य निरस्तत्वात् तस्मात् प्राज्ञस्य परमात्मनोऽणुमात्रत्वव्रीहियवमात्रत्वादे: प्राणमयत्वमनोमयत्वादेश्चोपपत्तिर्यथोपाधिभेदात् क्रियते । एवं जीवात्मनोऽप्यणुत्वादिव्यपदेशोऽन्त: करणोपाधिमादायैव क्रियताम् । जीवस्याणुत्वपक्षो न श्रुतिसम्मतो न वा युक्ति सिद्ध: । अत्र च श्रुतय: प्रमाणम् "आत्मा नित्य: सर्वगत: नित्य शुद्ध बुद्ध युक्तस्वरूप: सदसद्रूपैकरस:" इत्येव श्रुतिषु श्रूयते "आकाशवत् सर्वगतश्चनित्य:" "स वा एषमहानज:" अजोनित्य: शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे इत्यादि श्रुतिस्मृतिभि: आत्मन: जीवात्मन: व्यापकत्वमेव सिद्ध्यति ।

मध्वमतेजीवस्वरूपम् :-----

अत्रोच्यते मध्वमतानुयायिभिः द्वैतवादिभिः मध्वमतमादाय जीवस्वरूपं विमृश्यते ।तत्र जीवत्वं तु अणुपरिमाणवत्त्वेसति सुखदुःखाद्याश्रयत्वेसति सर्वं व्यापि कार्यकारित्वम् । मध्वमते जीवोऽणुःपरमात्मा व्यापकः। तत्र च श्रुति प्रमाणम्"स यदास्माच्छरीरात् उत्क्रामति सहैवैतैः सर्वैरुत्क्रामति चन्द्रमसमेव ते सर्वे गच्छन्ति एवन्च तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे आसां" श्रुतीनां जीवस्याणुत्वमेव सिद्ध्यति ।

यदुक्तं अद्वैत वादिभिः जीवोनाणुःकिन्तु व्यापकः"स वा एष महानज" आकाशवत् सर्वगतश्चनित्यः" इत्यादि श्रुति प्रामाण्यानुरोधात् इति तन्न समीचीनं कुतः जीवस्याणुत्वात् ,जीवो अणु परिमाणः एव नचमहत्परिमाणः नापि मध्यम परिमाणः पूर्वनिरस्तत्वात् अणु पदामेव श्रुतयः प्रतिप्राप्स्यन्ति तथाहि" अणुरेषात्मा" बालाग्रशतभागस्य बतधा कल्पितस्य च ।

भागो जीवः स विज्ञेयः स चानन्त्याय कल्पयते ।यीत तथा च अनुमानम् - जीवो न व्यापकः उत्क्रान्तिमत्वात् गतियत्वात् क्रियावत्वाच्च स्वशरीरवत् ।अत्र न आत्मनः व्यापकत्वं"एषो अणुरात्मा चेतसा वेदितव्यः, यस्मिन् प्राणाः पन्चधा संनिवेश,अथ च आराग्रमात्रोह्यवरोप्यदृष्टः इत्यादिना जीवस्याणुपरिमाणत्वमेवागमयन्ति ।जीवस्य व्यापकत्वे इमाः श्रुतयः विरुध्येरन् । तत्र उत्क्रमणं मरणं अचलतोऽपि जीवस्य देह स्वाम्यदिवृत्त्योपपद्यते । तथापि गत्यागती तु अमध्यमपरिमाणस्य तस्माणुत्वे सत्येव उपपद्येयाताम् , नान्यथा ।

न च जीवस्याणुत्व स्वीकारे 'स वा एष महानज आत्मा' इत्याद्या महत्त्वबोधिकाः श्रुतयः बाध्येरन् इति वाच्यम्, तासां श्रुतीनां परमात्मपरिमाणबोधिकत्वात्, परमात्माधिकारे एव पठितत्वात् ।

अपि च साक्षादेव जीवस्याणुत्वं श्रूयते - 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश'[1] अत्र प्राणसम्बन्धा जीवात्यैवगम्यते न परमात्मा । तथा च उन्मानादपि जीवात्मनः एव अणुत्वं गम्यते- 'बालाग्रशतभागस्य'[2] आराग्रमात्रो ह्यवरोऽपि दृष्टः[3] तस्मादणुरात्मा । न चाणुत्वे तस्य शरीरव्यापित्वाभावात् सर्वाङ्गीणशैत्यानुपलब्धिर्न स्यादिति वाच्यम्, चन्दनबिन्दुवत्तथासम्भवात् । यथा शरीरैकदेशस्थचन्दनबिन्दुः सकलशरीरव्यापिनं आह्लादं जनयति, तथा अणुरात्मा एकदेशस्थोऽपि सकलदेहव्यापिनीं शैत्यानुपलब्धिं करिष्यति । 'हृदि एष आत्मा'[4] 'स वा एष आत्मा हृदि' (बृ० ४।३।७) इत्यादि श्रुतिभ्यो हृदि अवस्थानमणोरात्मनो गम्यते ।

यदि च सावयवस्य चन्दनबिन्दोरणुत्वेऽपि देहव्याप्तिः सम्भवति, न तु निरवयवस्य जीवात्मन तथा सम्भवतीत्युच्यते, तदा मणिदीपकवत्तथा व्याप्तिसम्भवो द्रष्टव्यः । तथाहि, यथा मणिदीपादिः प्रकोष्ठैकदेशवर्ती अपि

---

१- मु० ३।१।९ ॥
२- श्वे० ५।८ ॥
३- श्वे० ५।८ ॥
४- प्रश्न० ३।६ ॥
५- बृ० ४।३।७ ॥

स्वगुणप्रभाद्वारा सर्वं वेश्याभिव्याप्य तिष्ठति, तथैव हृदिस्थोऽपि अणुरात्मा स्वगुणेन चैतन्येन सकलशरीरमभिव्याप्य तिष्ठति । एवञ्च धर्मिभूतज्ञानस्य जीवात्मन एकदेशस्थत्वेऽपि अणुत्वेऽपि तस्य धर्मभूतस्य ज्ञानस्य चैतन्यस्य सकलशरीर व्यापित्वं स्वीक्रियते ।

न च गुणिव्यतिरेकेण गुणस्यान्यत्र वृत्तिः कथं स्यात् , न हि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते इति वाच्यम्, व्यतिरेकस्य गन्धवद् द्रष्टव्यत्वात् । यथा गुणस्यापि गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति, तथा अणोरपि सतो जीवस्य व्यतिरेकेण चैतन्यगुणस्य वृत्तिर्भविष्यति । एवं च सति गुणो नाश्रयविश्लेषा युक्तो गुणत्वाद् रूपादिवदिति न युक्तमनुमानं गन्धे व्यभिचारात् ।

न च जीवात्मनश्चैतन्यगुणत्वे विवादः, श्रुत्या सिद्धत्वात्, अहं ज्ञानवानित्यनुभवाच्च । श्रुतिस्तावत् चैतन्यंगुणं जीवस्य निर्दिशति नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते[1] तदेषां प्राणानां विज्ञानेन विज्ञानमादाय समस्तशरीरव्यापित्वमपि चैतन्येन गुणेन जीवात्मनो निर्दिशति श्रुतिः "आलोम्य आ नखाग्रेभ्यः" ।[2] भेदोऽपि तावत् चैतन्यस्य गुणस्य आत्मन उपदिशति श्रुतिः । विज्ञातुर्विज्ञातेरिति द्रष्टुर्दृष्टेरिति । एवमात्मा अस्तुरिति सिद्धम् । स चानेको ज्ञानगुण इति च ।

---

१- बृ० २।१।१७ ॥
२- छा० ८।८।१ ॥

तत्त्वमस्यादि वाक्यार्थ विचार: :---

अद्वैतमते तत्त्वमसीतिवाक्यं अखण्डार्थ बोधकं यथा लोके सोऽयं देवदत्त: इत्यादि वाक्यं देवदत्तस्वरूपमात्रबोधकम् यथा अस्मिन् वाक्ये परोक्ष देश परोक्षकाल विशिष्ट वाचक: स पदार्थ:, एवं सन्निकट देश सन्निकट कालविशिष्ट वाचक: अयं पदार्थ: अत्र हि परोक्षदेशपरोक्षकाल विशिष्टवाचकस्य स पदार्थस्य एवमपरोक्षदेश अपरोक्ष कालविशिष्टवाचकेन अयं पदार्थेन सह परस्परमैक्या योगातर तत्र विरुद्धांशस्य परित्यागेन देवदत्तस्वरूपकाले उभयपदस्य लक्षणा स्वीक्रियेती । एवमेव तत्त्वमसीति वाक्ये सर्वज्ञत्वविशिष्टं चैतन्यं तत् पदार्थ: एवं अल्पज्ञत्वविशिष्टं चैतन्यं त्वं पदार्थ:। एवं अनयोऽपरस्परं ऐक्यासम्भेन सर्वज्ञत्वाल्पज्ञत्वरूपयो: विरुद्धांशयो: परित्यागेन चैतन्यस्वरूपमात्रे उभय पदस्य लक्षणा स्वीक्रीयते । एवमेव एतदभिप्रायेणैव पंचदशी ग्रन्थेरूप-तत्वविवेक प्रकरणे इदमुक्तम् ---

> सोऽयमित्यादि वाक्येषु विरोधात्तदिदन्तयो: ।
> त्यागेन भागयोरेक: आश्रयो लक्ष्यते यथा ।।४७ ।।

एवमेव ---

> मायाऽविद्ये विहायैव उपाधिपरजीवयो: ।
> अखण्डं सच्चिदानन्दं परब्रह्मैव लक्ष्यते ।।४७।।

अस्यार्थ : :---

सोऽयं देवदत्त: इत्यादि वाक्येषु तदिदन्तयो: तदेतद्देशकाल-वैशिष्ट्य लक्षणयो: धर्मयोर्विरोधादैक्या नुपपत्ते भागयोर्विरुद्धांशयो:त्यागेन

एक: आश्रयादिवदाद्स्वरूपं एकमेवं यथा लक्ष्यते ।तथैव परजीवयोरुपाधिभूते मायाविद्यपूर्वोक्ते विहाय अखण्डं भेद रहिते पर ब्रह्मैव महावाक्येन लक्ष्यते इति । इयमेव लक्षणम भागत्याग लक्षणा शब्देनापि उच्यते भागत्यागलक्षणैव जहदजहल्लक्षणा शब्देनाप्यभिमीयते । अत्र हि द्वैतवादिन: इममाक्षेपं कुर्वन्ति,यदद्वैतवादिन: यत् तत्त्वमसि इति वाक्ये उभयपदस्य लक्षणां मन्यन्ते तदपेक्षया मतमेत एकपद लक्षणा स्वीकारे लाघवं अद्वैतमतापेक्षया इति तत्र समीचीनम् । यत: तात्पर्यग्राहकोपक्रमादिभिर्लिङ्गै: तत्त्वमसीति वाक्ये अभेद परकत्वस्य निश्चये सति तन्निर्वाताप यदुभयपदस्य लक्षणा स्वीक्रियते तत्र न किमपि दूषणं ,यत: एकपदस्य लक्षणां विधाय तात्पर्य विषयताया: भङ्ग: न क्रियते । यथा च न्याय तत्त्वचिन्तामणौ उक्तम् ----

'तात्पर्यात्तु वृत्ति: न तु वृत्तेस्तात्पर्यम्' (यत: तात्पर्यग्रहानुसारेण लक्षणादि वृत्तीनां कल्पना क्रियते । किन्तु वृत्त्यनुसारेण तात्पर्यस्य-निर्णय: नहि क्रियते ।अन्यथा अग्निमधिपवद: इत्यादौ मुख्य वृत्त्यनुरोधेन माणवक: अग्नि रूप: एव स्वीकर्तव्यो भविष्यति ) प्रकृते तात्पर्यग्रहानुरूपेण जहदजहल्लक्षणया यदा अभिष्टाथ सिद्धि: जायते,तदा तत् सहचरितत्वादि निमित्तानां कल्पना सर्वथा अनुपयुक्तास्ति । एवं अभेद परतायां तत्त्वमसीति इत्यादि वाक्ये बोधकताया: अनुपपत्तिरपि न भवति । इदञ्च पूर्वमेव उक्तम्

एवं द्वा सुपर्णा सयुजा इत्यादि वाक्येन जीवे ब्रह्म सहचरितत्वस्य प्रतिपा न कर्तुं शक्यते , किन्तु जीवेऽन्त: करणस्य सहचरितत्वमुक्तम् । ब्रह्म सहचारितत्वस्य जीवे प्रसिद्धिरपि नास्ति । सन्मूला: सोम्येमा: प्रजा:' अनेन वाक्येनापि जीवे ब्रह्माश्रितत्वमं नाभिहितम् ,यत: अत्र प्रजापदेन जायमानानां

पदार्थानां ग्रहणं कृतम् ,जीवश्च नित्य:,अत: नित्यस्य जीवस्य ग्रहणं न कर्तुं शक्यते ,अत: इदंयदुक्तं यत् ब्रह्म जन्यत्वेन जीव एव ब्रह्मरूपेण उक्त: स वचनसम्भव:। इदन्च यत् स्मृतिवाक्यं उद्धृतमस्ति यत ब्रह्मणो मुखमित्येव मुखाज्जातत्व हेतुत: । यथावद् उच्येत तद्वद जीवो ब्रह्मेति वाक्यवेत इयं स्मृतिरपि श्रुतिविरुद्धत्वात् अप्रमाणम् ।` तद्गुणसारत्वात् (ब्र०सू० १।१।२३) अनेन सूत्रेण जीवे बहम गुणानां सम्बन्ध: स्थापित:, सोप्यसंगत: एव, यत: उक्त सूत्रे तद्गुणस्मरत्वात् इत्यस्यायमर्थ: बुद्धि गुणस्मरत्वात् । अर्थात् बुद्धे: सूक्ष्मत्वादिगुणानां जीवे समन्वयात् जीवस्यैव ब्रह्मवत् सूक्ष्मत्वमुक्तम् । अस्मिन्नेव अर्थे उक्तसूत्रस्य तात्पर्यं विद्यते ।

इदं च यदुक्तंयथा शाखाया: समानदेशेऽवस्थित: चन्द्र: शाखा चन्द्र इत्यनेनाभिधीयते । तथैव जीवस्य अन्तर्यामित्वात् जीवस्य समानदेशे विद्यमाने ब्रह्म(तत्त्वं) एवमुच्यते । श्रुतिरपि वदति आत्मनि तिष्ठन् (श०ब्रा० १४।५।५।३०) ब्राह्मणो सर्वासां देवतानां निवासेन यथा ब्राह्मणो केसर्वा देवता एव व्यवह्रयते लोके तथैव जीवे व्याप्यत्वात्, ब्राह्मणोऽपि जीवरूपत्वमुक्तम् । अथवा जीवस्याश्रय: जीवस्यसर्वकार्ये साधक: , अत: तत्सिद्धिपेटिकस्यां (जैमि०सूत्र १।४।१३)कथित तत्सिद्धि तत्कार्यकारित्वादि गौडीया वृत्ते: निमित्तमादाय यजमान: प्रस्तर: इत्यादिवत् ब्रह्मैव त्वं (जीव रूपेण)उक्तम् भवति । एतमपि कथनंवतएव निरस्तं भवति यदा मुख्यरूपेण अभेद व्यवहार सम्पद्येत ,तदा गौणरूपणां कल्पना सर्वथा अन्याय्या ।

अपि च विशिष्ट पदार्थानां अभेदानुपपत्या विशेषणांशस्य त्यागेऽपि विशेष्यांशस्य त्यागो न भवति । न्याया मृतकारैर्यदुक्तं अस्ति यत् (तत त्वं) इत्यत्र तत्पदार्थं वस्तुत: तृतीया विभक्तिनिर्दृष्टा,किन्तु तटस्थाने

"सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" (पा०सू० ७।१।३९)अनेन सूत्रेण प्रथमायाः विभक्तेःप्रयोगः कृतः अथवा तृतीयाः विभक्तेर्लोपः अतः तत्वमसि इत्यस्य तेन (ब्रह्मणा) त्वं तिष्ठसि" अथवा ततः प्रह्यपः त्वं संजातः अथवा तस्य (ब्रह्मणांश: ) अथवा तस्मिन् ब्रह्मणि लमसि एवं विधाः अर्थाःअभिमताः यतः अनेन जीवेनात्मना प्रभूतः (अनुव्याप्तः) पीयमाणः अत्यर्थं रसानर गृहान् मोदमानः तिष्ठति (छा० ६।११।१) सन्मूल्माः सोम्येमाः सर्वा प्रजाः" (छा० ६।२२।८)४) ऐतदात्म्यमिदंसर्वं (छा० ६।८।७) इत्यादि वाक्यशेषात् तथैव अर्थः निश्चीयते । एवं मीमांसकाःअपि इतयत् शुन्वन्ति सामिनैनीहि तदत्वाहुः। अस्य वाक्यस्य एवं विधमर्थं कुर्वन्ति । उत इत्ययं शब्दो यथं शब्दार्के वर्तते । अत्र यत् यस्मिन् हविर्धाने साममभिश्रवन्ति तत् तस्मिन् सानिधेनुरभिप्रयुः" ।"ज्योतिष्टोमयोग हविर्धानसंज्ञक मण्डपे दक्षिणास्यां दिशि एव आरस्थादिशि सोमत्वता स्थापनार्थं । प्रकट द्वयं स्थाप्ते तत्र दक्षिण हविर्धानं सका समीपे सोमत्वतारसत्वं निस्मासनं भवति । तत् समीपे स्थित्वा समिधनिए त्रस्या उच्चारणं भवति (द्र जै० न्या०मा०पृ० २२२) अत्रापि यततपदयोर्तरं सम्पतम्यर्थे एवं प्रथमा । एतौव च न्यायो चितमः । यतः (तत् त्वमसि )अत्रापि

प्रथमाविभक्ति संख्याके सावकाशा अप्रकानभूतापि किन्तु तृतीया विभक्तौ निरवकाशत्वं एव अनेकतिप्रादिदिनानां स्वारस्यं निहितः । अतः तेन त्वमसि" एवं विधः अर्थः उचितताः । एवं न्यायामृत कारस्य कथनं अतएव निरस्त भवति यथा"प्रैतु होटश्चयसः परब्रह्मणः" प्रयजमानस्य प्रोद्गुगा तृणां" (श०ब्रा० ४।१। ७।२९) अस्मिन वाक्ये अवस्थिते प्रारगातॄणां अस्य पदस्य विचार समये अयं प्रश्नाः उत्थापितः यती सोममदाप कर्ता उद्गाता एक एव भवति ,तदा बहुवचनं कथं संगतं भविष्यति । तत्र इदं तावदुत्तरं प्रत्ययस्य एकत्वे लक्षणां विनैव प्रकृतैरेव समस्तसामगायकेषु पुरुषेषु लक्षणा क्रियते। तथैव प्रकृतेअपि विनैव प्रकृतैरेव समस्तसामगायकेषु पुरुषेषु लक्षणांविनैव प्रकृतिरेव शुद्ध चैतन्ये लक्षणा तत्पदेतिप्रत्ययस्य करण त्वादिषुलक्षणांविनैव प्रकृतिरेव शुद्ध चैतन्ये लक्षणा

कर्तव्या । अपि च यथा सक्तून् जुहोति (आप०श्रौ०सू० १३।२४।१६) अस्मिन् वाक्ये (जैमि०सू० २।१।३) सम्यक् विचार्य अयं निश्चयः कृतः, यत् द्वितीयां विभक्तिः तृतीयायां विपरिणम्य सक्तुभिर्जुहोति इत्येवं विधः एव अर्थः कर्तव्यः। तथैव प्राड्गात्पाम्नापि विभक्तेः अन्यथानयनम् कर्तुं शक्यमासीत्, किन्तु नैव कृतम्, यतः प्रकृतेरपेक्षाया प्रत्ययस्यैव प्राधान्यं मन्यते । एवञ्च गुणे तन्यायकल्पना इति न्यायानुसारेण गौणीभूतायाः प्रकृतेरेव लक्षणा न्याय्या ।

अन्यच्च अत्र प्रातिपादिकस्य निरवकाशत्वमपि नास्ति । कुतः यथा विभक्तेः संख्यार्थे सावकाशत्वं तथैव विशेष्यांशे प्रकृतेरपि सावकाशत्वम् , न च प्रकृतेः प्राधान्यं संभवति यतः प्रत्ययस्यैव प्राधान्यस्वीकारात् । प्रकृति प्रत्ययौ सहार्थं ब्रूतः तयोः पुरुष्यः प्राधान्येन इति न्यायाच्च । इदं च यदुक्तं अनेक प्राति-पादिकानां स्वारस्यं तृतीया विभक्तौ अस्ति तु तदपि कथनं नोचितम्, परः गभीरायां नद्यामित्यत्र अनेक प्रातिपदिकेषु विद्यमानेष्वपि स्वारस्य प्रतीतिर्न भवति, तात्पर्यानुरोधेन तथैव कल्पनायां प्रकृतेऽपि तथैव मन्तव्यो भवेत्, अपि च यद् एतदुक्तं प्रयाज शेषेण हविंषि अभिघारयति (तै०सं० २।६।१) इत्यस्मिन् वाक्ये प्रयाजाख्ये कर्मणि अप्रयुक्त घृतस्य अवरमावि कर्मणः हविद्रव्ये प्रक्षेपमात्रं भवति । तृतीयाश्च अयमर्थः क्रियते प्रयाज शेष हविषु प्रदिपाति (जै०सू०४। १।१४) इत्यत्र अयं निश्चयः क्रियते प्रयाजशेष भूतघृतेन हविषः अभिघारणं प्रतिपत्तिकर्म उपयोक्ष्यमाण द्रव्यस्य नहि संस्काराख्यं कर्म यदि प्रयाजकरणानन्तरं किंचिदपि घृतं नावशिष्यते । एवंअवशिष्टमपि घृतं यदि नष्टमपिभवत् तदा हविषः संस्कारार्थं नूतनं घृतमेव गृह्येत् ।अतः इलो भक्षयति इतिवत् प्रयाज शेष प्रदिपाति इदृशः विनियोगः एव उचितः । सक्तूनज्जुहोति एतद्वाक्य विहित यत् कर्म तदपि व्रीहि प्रोक्षणवत् उपयोक्ष्यमाण द्रव्यस्य संस्काराख्यं कर्म इति न मन्तव्यं भवेत् ,

यतः हीनरूपकर्मणः सत्रूणां विनाशः एव जायते । न च तदवशिष्यते यद् भविष्यो तदुपयोगी भवते, अतः सक्तुं होमं प्रधानं कर्म इति मत्वा ब्रीहिभिर्यजेत इतिवत् शक्तिमिज्जुहोति इत्यैवं विधः अर्थः समुचित एव । एवं न्यायामृतकारः तत्त्वमसी इत्यादि वाक्ये तस्य त्वं इत्वं प्रकारेण षाष्ठीतत्पुरुष समासस्य कल्पनां कृतवान् तदप्यशोभनमेव यतः षाष्ठीसमास कल्पनायां तद्घति पदस्य सम्बन्धरूप षाष्ठ्यर्थे लक्षणा कर्तव्या भवति । तां विना असमस्तपदेन औचित्यार्थस्य उपपत्तौ सत्यां षाष्ठी समासस्य कल्पना न न्याय संगता, अन्यथा स्थपत्याधिकरणस्य विरोधी भविष्यति । तथा च मीमांसायाम् ।

"रौद्रचरुं निरपयेत् इतद् वाक्येन विहित वास्तु इष्टः विधानं कृत्वा उक्तं एतया निशादस्थपतिं याजयेत" निशादस्थपतिहत्यस्मिन्पदे अयं संशयो जायते किं तावदत्र निशादानां स्थपतिः इत्यैव विधः षाष्ठी सत्पुरुष समासः विधः आहोस्वि निशादश्चासो स्थपतिः इत्यैवं प्रकारेण कर्मधारय समासःनिवक्षितः । अयं तावत् सिद्धान्तः कृतः रत्थपतिनिशादस शब्द सामर्थ्यात् जैमिसूत्र (६।१।५१) अर्थात् षाष्ठो समास मूलक सम्बन्धादिषु लक्षणां विनैव कर्मधारय समासेन निशाद रूपः स्थपतिः इत्यर्थः एव स्वीकरणीयः अपिच"ऐतदात्म्यमित्यत्र तस्येदं इत्यस्मिन्नर्थे यद् भवता ज प्रत्ययस्य विधानं कृतं तदपि नोचितम् । यतः एवं विधस्य प्रयोगस्य कुमारयदृश्यमानत्वात् इति सौख्यमित्यादि स्थलेषु स्वार्थे ष्यञ प्रत्ययस्य प्रयोगो दृश्यते । अतः एतद् सद् आत्मा यस्य सर्वस्य तद् एतदात्मा तस्य भावः ऐतदात्म्यं एतादृशी व्यवस्थैव न्याय संगता ऐतदात्म्यस्य यत् आत्मना सह सामानाधिकरण्य निर्देशः सः स्वार्थे विहित प्रत्ययस्य अथवा भावस्य भवितुः पदार्थस्य अभेदोपचारेण तदैव संगतो भवति, यथा"यो वै भूमा तत्सुखं छा०(७।२३।१) अत्र हि भूम्नो भावः भूमा इत्यैवंप्रकारेण भूमारूप भावस्य भवितुः सुखात्मनः सामानाधिकरणस्य निर्देशः कृतः । स्मृति वाक्ये एत द् व्यापकत्वेन ऐतदात्म्यस्य या उक्तिः सा न

युक्ता,यत: एकविज्ञानेनसर्व विज्ञानस्य अभेद परक प्रतिज्ञाया: विरोध:स्यात् ।

यच्च द्वैतवादिन: तत्त्वमसि इत्यस्य एवं व्याख्यानं कुर्वन्ति आत्मा + अतत् + त्वमसि अर्थात् त्वं सनासि अर्थात् परमात्मनि स्वातन्त्र्यादि ये गुणा: पूर्वं आसन् ते गुणा: त्वयि जीवे न सन्ति अत: अतत्त्वमसि अर्थात् त्वं परमात्मा नासि कुत: स्वातन्त्र्यादि गुणानां त्वयि अभावात् इत्येवं पदच्छेदेन यद् अभेद निराक्रियते तन्न समीचीनम्,एवमर्थकरणे अभेद प्रतिपादिका श्रुति: विरुध्येत,तस्मात् अस्य तत्त्वमस्यादि वाक्यस्य भेद प्रतिपादने तात्पर्याभावात् अभेदे एव तात्पर्यमवसीयते । तदेतत् रामानुजाचार्या: सहन्ते तथाहि यत माधवादिन: सोऽयं देवदत्त: इत्यादि दृष्टान्ते विरोध परिहाराय उभयपदस्य लक्षणा स्वीक्रियते तन्न युक्तम् । यत: अत्र लक्षणाया: अवसरस्य अविद्यमानत्वात् । यत: एकस्मान: व्यक्ते सम्बन्ध:यदि भूतवर्तमानयो: द्वयो: कालयो: भिन्नावस्थायां युगपत्नास्ति तदा न कश्चित् विरोध: एतस्यामवस्थायां लक्षणाया: आवश्यकतैव नास्ति, यत: देवदत्तस्य स्थिति: अन्यास्मिन् स्थाने भूतकाले आसीत् ,इदानी तस्य स्थिति: सन्निहित देशे वर्तमान काले वर्तते अत: विरोधाभावात् लक्षणा नाभ्युपगन्तव्या एवमेव तत्त्वमस्यादि वाक्येऽपि एकपद लक्षणयेव निर्वाहात् उभयपद लक्षणा स्वीकारो व्यर्थ एव । उक्तन्चैतत् सर्वदर्शन संग्रहे- २०४ पृष्ठ दृष्टान्तेऽपि विरोध धुर्येण लक्षणा गन्ध सम्भवात् । एकस्य- तावत् भूतवर्तमान कालद्वय सम्बन्धो न विरुद्ध: देशान्तरस्थितिर्भूता सन्निहित देशस्थितिर्वर्तते इतिमदेशभेद सम्बन्ध विरोधश्च काल भेदेन परिहरणीय: लक्षणा पक्षे त्वेकस्यैव पदस्य लक्ष्यकत्वाश्रयणेन विरोध परिहारे पद द्वयस्य लाक्षणिकत्व स्वीकारो न संगच्छते । अन्यथा एकस्य वस्तुन: तदेन्ताविशिष्टत्वावगाहनेन प्रत्यभिज्ञाया: प्रामाण्यानङ्गीकारे स्थायित्वासिद्धौ क्षणभङ्गवादी बौद्धो विजयेत एवमत्रापि जीवपरमात्मनो:शरीरात्मभावेन तादात्म्यं न विरुद्धम् इति

प्रतिपादितम् । जीवात्मा हि ब्रह्मशरीरतया प्रकारत्वात् ब्रह्मात्मक: य आत्मनि तिष्ठन् आत्मनो ऽन्तरो यं आत्मान वेद यस्य आत्मा शरीरं बृ० ३।७।२२) इति श्रुत्यन्तरात् इति ।

अत्र द्वैत वादिन: मध्वाचार्या: प्रत्यवतिष्ठन्ते`तत्त्वमसि`इत्यास्मिन् महावाक्ये अद्वैतवादिभि: उभयपदस्य लक्षणा अभ्युपगम्यते किन्तु मम मते तदपेक्षया एक पदस्य लक्षणायां अभ्युपगम्यमानायां लाघवम् । अद्वैतपक्षेऽपि उक्तपदलक्षणास्वीकारे महद्गौरवम्, नेदं महावाक्यं अभेद बोधकं अपितु जीवेश्वरयोर्भेदबोधकमेव अत्र अनेके हेतव: सन्ति तथाहि`तत्सहचरितत्वात् -`सह चरणस्थानित्यादि न्यायसूत्रनुसारेण` तत्त्वमसि` इत्यस्य अयमर्थ: क्रियते यत:`द्वा सुपर्णा समुजासखाया` इत्यादि श्रुतिवाक्ये जीव: ब्रह्मण: सहचारि इत्युच्यते ।तत्सह चरिते तद्व्यपदेश: तथैव भवति यथा वसन्तादिभ्यष्ठक(पा०सू० ४।२।६३) इत्यस्मिन् सूत्रे वसन्त सहचरित वसन्त वर्णनपरक ग्रन्थे वसन्तपदस्य प्रयोग: कृत: क्रियते महाभाष्यकारा वदन्ति । अयुक्तोऽयं निर्देश:` तदधीते वेदेति च इति वर्तते न च वसन्तोनामाध्ययनमस्ति,नैष दोष: साहचर्यात् ताच्छब्द्यं भविष्यति` अर्थात् तदधीते वेद वा इत्यस्मिन अधिकारे वसन्त पदोत्तरं ठक् प्रत्ययस्य विधानं कृतम्,वसन्तादिभ्यष्ठक इति सूत्रेण वसन्तमधीते वेद वा इति वासन्तिक: किन्त्वत्र वसन्तपदं कालविशेषस्य वाचकं नहि कश्चन अध्ययतीयस्य ग्रन्थादे:वाचकम् ।अत: वसन्तपदस्यौपचारिक प्रयोग: वसन्त वर्णन परके ग्रन्थे तत्साहचर्यात् कृत: । एवं प्रतिपाद्यप्रतिपादकयो: वागर्थयोर्वा औत्पत्तिक (नित्य:) सहचार: स्वीकृत: ।फलत: प्रकृते केवल तत् पदस्य तत्सहचरिते लक्षणां कृत्वा अयमर्थ: क्रियते ब्रह्मसहचरितस्त्वमसि`इति ।अयमपि द्वितीयो हेतु`तदाश्रितत्वात्`सन्मूला: प्रजा: सदायतना: (छा० ६।८।४) अस्य वाक्यशेषानुसारेण एवं निश्चीयते यत् जीवादि सर्वा:प्रजा:

सद्रूपरूपे ब्रह्मणि: आश्रिता: अत: प्रत्याश्रितत्वात् जीव: तथैव ब्रह्मस्वरूप: उच्यते यथा (समर्थः पदविधि:) इत्यस्मिन् सूत्रे समर्थ पदस्य आश्रित समासादि विधेय पदार्था: समर्थं पादिनाधीयन्ते उक्त सूत्रे वार्तिक माध्यमेन आक्षेपसमाधानं च कृतम् ।समर्थाधिकारस्य विधेय सामानाधिकरण्यात् निर्देशोऽनर्थक: सिद्धं तु समर्थानामितिवचनात् ,अस्य व्याख्याने आचार्य कैयट: एवमुक्तवान् समर्थानां य: समास: स समर्थ: एव । योऽसमर्थानां (भार्याराज्ञ: पुरुषो देवदत्तस्येत्यादौ सोऽपि नियमाभावाद् निवर्तन्त: एव,तस्यासमर्थस्यापि अनेन समर्थवचनेन न किंचित् क्रियते निष्पन्नत्वात् लक्षणान्तरेण साधुत्व व्यवस्थापना च्च । अकिञ्चित कुर्वाणमित्यादयोऽस्य समर्थानां समासा परिगणने निरस्ता तदर्थमपि एतन्नभवति सिद्धत्विति समर्थपद सम्बन्धित्वात् । मदर्थिरुपचारात् समर्थ शब्देनोच्यते इति म०पृ० ४८ ।।

३-तज्जत्वाद्वा -- अयं तृतीयोऽपिहेतुर्जीवेश्वरयोर्भेद साधनाय उक्त: जज्जत्व-रुपमुपाधिमादाय यथा ब्राह्मणस्य मुखमासीत् ३१।११) अत्र ब्रह्मण: मुखाज्जातित्वेन ब्राह्मण: मुखमित्युच्यते । इग्यण: सम्प्रसारणं (पा०सू० १।४५) इत्यस्मिन् सूत्रे भाष्यकारेपद मुक्तं यथा काकाज्जात: काक: श्येनाज्जात श्येन: एवं सम्प्रसारणा ज्जाते सम्प्रसारणं इति महाभाष्य पृ० ३१२ अर्थात् यण् स्थाने प्रयुक्तयमानस्य इक: सम्प्रसारण संज्ञा अत: क्रियते यत् तत्सम्प्रसारणादेवोत्पन्न: इत्थं तदर्थ जनितत्वात् त्वमर्थ उच्यते तत्त्वमसि इति अर्थात् ब्रह्मणो जातिस्त्वमसिऽति ।

<u>४-तदधीनत्वाद्वा</u> :----

अत्र हि तदधीनत्वनिमित्तमादाय त्वं पदार्थ: तत्शब्दवाच्योत्त्वते तत्त्वमसि महावाक्ये प्राणबन्धनं हिसोम्यमन: (छा० ६।८।२) अस्य वाक्यशेषस्य

इदं तावद् भाष्यं कृतमस्ति । प्राणोपलक्षित देवताश्रयं मनः तदुपलक्षितो जीवः ) शा०भा० ३७६) अर्थात् अस्यायमर्थंआपः जीवः ब्रह्मरूपाया परदेवतायाः अधीनः अतः जीवः तथैव ब्रह्म शब्देनाभिधीयते यथा धान्यमसि धिनुहि देवान् (मा सं० १।२०) अत्र वाक्ये तण्डुला : एवं धान्य शब्देनाभिधीयन्ते ।कात्या श्रौतसूत्रे २।७ उक्तं धान्यमसीति तण्डुलानुप्य पिनष्टि अर्थात् पुरोडाश निर्माणाय प्रस्तरोपरि तण्डुलान स्थाप्य धान्यमसि धिनुहि देवान् इयं यन्त्रं उच्चारयन प्रेषणं कर्तव्यम् तण्डुलेषु धान्यपदस्यप्रयोगः अतः क्रियते, तत्र स्तण्डुलाः धान्ये ना उत्पद्यन्ते तदधीनाश्च सन्ति ।

५-तत्सादृश्याद्वा :---

महर्षिः जैमिनिः सारूप्यातर जै०सू० (११४।२५) अस्मिन् सूत्रे २७वमुक्त वान् यथा आदित्यवत् प्रकाशमानत्वात् यूपः एव आदित्य शब्देनाभिधीयते तथैव ब्रह्मसदृश चैतनत्वात् जीवोऽपि ब्रह्मशब्देनाभिधीयते अतः तत्वं उत्पस्य अयमर्थः तत्सदृशस्त्वमसि इति । तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् (ब्रह्म० २।३।२९) इत्यस्मिन् सूत्रे अयं तावत् निर्णयः कृतः यह जीवः ब्रह्मवत्। विभुत्वादि गुणै सम्पन्नत्वात् ब्रह्मरूपः इत्युच्यते । महाभाष्यकारोऽपि बहुगणावतुअतिसंख्या पा०सू० (१।१।२३) रत्यास्मिनी सूत्रे इदमुक्तवानर अन्तरेणापि वतिं अतिदेशो गम्यते तथा एष ब्रह्मदत्तः अवदमदत्तं ब्रह्मदत्तः इत्याहारतेवयं मन्यामहे ब्रह्मदत्तवदयंमिति (भेदक- ३०७) अतः तत् त्वं इत्यस्य अयमेव अर्थ निश्चीयते यत् तद्वत्त्वमसि इति ।

अपि च यद् अद्वैतवादिनः विरोध परिपराय जहदजहद लक्षणाम्भ्युपगच्छन्ति तदपि न शोभनम् ,यतः जहददजहद लक्षणायां तदादि पदानां वाच्यार्थस्यान्तर्गतत्वेन बुद्धिस्थ तद्देशकाल विशिष्टस्य वस्तुनः प्रत्यक्षादि प्रमाणैः वाधसतित्यागः एवं अयमितिपदं श्रवणेन पुनः तस्यैवार्थस्य ग्रहणं भवति, तदपेक्षाया केवलं जहल्लक्षणायां अबुद्धिस्थ एव अत्यक्ततीरादि पदार्थानां ग्रहणमात्रं

भवति ,अत: जहदजहदलदाणापेदाया अजहल्लदाणैव परं,अपिच दृष्टान्तदा-ष्टान्तयो: वैषम्यमपि अस्ति ,यथा प्रथमाविभक्ते: एकवचनस्य सुपां सुलुक इत्या-दि सूत्रेण तृतीयार्थविधानम् तथैव षष्ठिविभक्ते: बहुवचनस्य एकत्वादौ न विधानम् ।अत: श्रोदृगाहणां इत्यत्र विभक्तिलदाणां विनैव प्रकृतेरेव लदाणाकृता। किन्तु प्रकृते नहि कश्चित् एतादृश: प्रतिबन्ध:,अत: तत्त्वमसि इत्यस्मिन् वाक्ये प्रथमाविभक्ते: तृतीयार्थे एव प्रयोग दहनीय: ।अपि च 'ऐतदात्म्यमिदंसर्वं तत्सत्यं स आत्मा तत्त्वमसि' (छा० ६।८।७) अत्र हि तत्पदेन आत्मन: परामर्श: न क्रियते, यत: अत्र ऐतदात्म्यं इत्यैवविधं नपुंसकनिर्देश: अत: पुंल्लिगं आत्मानंसप-रामृश्य एष चा आत्मा एतदात्मा तस्येदं ऐतदात्म्यं उत्यैवं विधं अर्थकर-णमेवोधितम् ।अत: ऐतदात्म्यं (एतदीयं वस्तु) त्वमसि एवं विधायां संगमनिकायां भी:एव प्रतीयते । नाभेद: ,यत: अद्वैतमतानुसारेण एतदात्मायस्य तदैत दात्म्य इत्थमर्थकरणे भावप्रत्ययस्यष्यत्र इत्यस्य वैयर्थ्यं स्यात् तदपेदाया अर्थान्तरकल्पनैव उचिततरा तद्धित प्रत्ययार्थे इदं तावत् प्रसिद्धं यत् विचित्रा हि तद्धित गति:एवं स्मृतिरपि तथैव वदति'सं श्रष्टाचैव संहर्ता नियवारदाता हरि: तेन व्याप्तमिदं सर्वं ऐतदात्म्यं मतोविदु:'इति ।

अपि च शरीरवाचका: देवमनुज्यादि शब्दा: शरीरी पर्यन्तस्य बोधका: भवन्ति । प्रत्यण:शरीर जीव: एवं यस्य आत्मा शरीरं इयं श्रुति: वदति अत: तत्त्वं इदं वदं शरीरि ब्रह्मण: एवं शरीर भूतस्य जीवस्य अभेद व्यवहारेण तत् त्वं ऐतत् पद द्वयमपि मुख्य वृत्त्यैव प्रवृत्तं अत: उयो:कस्या-प्येकस्य पदस्य लादाणिकत्वं नाभ्युपगन्तव्यम् ।

अपि च एवमपि कथनं नोचितं यत् तत्वमासीत्यत्र ( स त्वमसि) इत्यस्मिन् वाक्ये जीवेश्वरयोर्मध्ये तादात्म्यसम्बन्धेन कश्चिद् विरोध:अस्ति । अयं तावतर प्रश्न: यत: एवंकथनं वेदानां तात्पर्यं अज्ञात्वैव व्यर्थं प्रलापममांन् । उत्पत्तौभवति , यत् तत् शब्द: सामान्यरुपेण निरयपरोदा पदार्थस्य बोधक:

एवं लक्षणः प्रत्यक्ष वस्तुनः बोधकः अतः द्वयोः परस्परं कामैक्यं किन्तु अस्योत्तरं तु इदं भविष्यति यतः आदित्यो यूपः इत्यस्मिन श्रुति वाक्ये आदित्य सदृशोयूपः" अयमर्थः क्रियते ।अत्र हि आदित्यशब्दस्य सादृश्ये लक्षणां यथा आदित्य यूपयोरैक्ताया असम्भवं दृष्ट्वा सादृश्यार्थस्य कल्पना क्रियते, तथैव तत्त्वं पदयोरैक्ताया असम्भवात् ।तत्त्वमसि इत्यस्मिन् वाक्येऽपि जीवः ब्रह्मसदृशः अयमेवार्थः स्वीकर्तव्यः अत्रैव अस्य वाक्यस्य त्ययानुगमातर ।

अपि च परमात्मा सर्वज्ञो भवति, जीवस्तु अल्पज्ञः यद्यद्वस्तु परमात्मा जानाति तानिवस्तुनि जीवः न ज्ञातुं शक्नोति,अतोऽपि द्वयोर्भेदः सिद्ध्यति । अपि च छान्दोग्योपनिषदः माणध्याय सद्विद्या या प्रकरणमस्ति तत्र अष्टमखण्डतः आरभ्य षोडश खण्डं यावत् नवखण्डेषु प्रत्येक खण्डे एकैकोदाहरणानुसारेण अन्ते आत्मा तत्त्वमसीत्यस्य" तत्त्वं विवेचितम् ।तत्र च स्पष्टरूपेण ऐक्यं प्रतिपादितं किन्तु मध्वाचार्याः भेदस्वभावात् सर्वेषां दृष्टान्तानां तात्पर्यं भेदं प्रतिपादने मन्यन्ते । स च दृष्टान्तः इत्थं प्रथमखण्डे इदमुच्यते सर्वेऽपि प्राणिनः सुषुप्तावस्थामनुभवन्ति । अस्यामेवावस्थायां जीवः सद्ग्रूपे ब्रह्मण सम्पन्नो भवति,तत्र च अयं दृष्टान्तः यथा व्याधहस्ते स्थितायां रज्जौ तत्र बद्धः पक्षी बन्धनादरक्षाणार्थं इतस्ततः निपत्य कुत्रापि आश्रयं न प्राप्य पुनः बन्धनमेव आयाति ,तथैव जीवोऽपिस्वप्न जागृत्यवस्थयोः इतस्ततः निपत्य कुत्रापि विश्रान्तिं अप्राप्य सुषुप्तावस्थायां सद्रूपं ब्रह्मैव आश्रयते ।अत्र च मध्वाचार्यः शकुनि सूत्रयो दाहरणेन इदं तावद अस्मिन् दृष्टान्ते आश्रया श्रुत्योर्भेद मन्यते ।अतः जीव ब्रह्मणोऽपि भेद एव ।भेदः एव स आत्मा तत्त्वमसि स्पष्टमायाति ।महर्षि उद्दालकः स्वपुत्रं श्वेतकेतुं प्रति स्वयमेवाद श्वेतकेतो इत्युक्त्वा प्रदर्शितः , एवमेव सर्वेष्वपि शेष खण्डेषु दृष्टान्तद्वारा भेद एव सर्वथा सम्पूर्यते। विज्ञापयति ।

अपि च तत्सत्यं सः आत्मा अपि आत्मशब्देन अपिधेय पदास्पदः ईश्वरः एव विहितो भवति न जीवः , यतः महाभारते इदमुक्तं यदाप्नोति यदादत्ते यच्चास्ति विषयानिह ।

यच्चास्त्यन्ततो भावः तस्मात् आत्मेतिगीयते ।

अत्र आत्मन् शब्दः आप्लृ व्याप्तौ आङ् पूर्वकाद् डुदाञ्दाने अद् भक्षणे अथवा अत सातत्यगमने एभ्यः चतुर्भ्यः धातुभ्यः निष्पद्यते अतः यः सर्वव्याप्तः सोदरे समस्तस्य विश्वस्य आदानं करोति यश्च मृत्युपर्यन्तं समस्तस्य चराचरस्य जगतः भक्षकः यश्च निरन्तरं गतिशीलः,एवंविधः यः परमेश्वरः स एव आत्मशब्देनाभिधीयते ।अतः तत्त्वमस्यादि वाक्यं सर्वथा भेद प्रतिपादकमेव नाभेद प्रतिपादकम् । अतएवोक्तं महोपनिषदि ----

यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथा नद्यः समुद्राश्च यथा जीवमहीरुहौ ।।
यथापिमा च धाना च शुद्धोदलवणे यथा ।
चोरापहार्यौ च यथा यथा पुंविषयावपि ।।
यथाज्ञो जीवसंघश्च प्राणादेश्च नियामकः।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ।
तथापि सूक्ष्मरूपत्वान्न जीवात्परमो हरिः ।
भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् ।।

## "अहं ब्रह्मास्मिमहावाक्यार्थविचारः"

अधुना तत्त्वमस्यादि उपदेश वाक्य निरूपणानन्तरं अहं ब्रह्मास्मि इत्यनुभववाक्यार्थस्य वर्णनं क्रियते । आचार्यः अध्यारोपापवादन्यायेन

तत् त्वं पदार्थयो: शोधनं कृत्वा तत्त्वमस्यादि वाक्येन अखण्डार्थं बोधयति, तदा अधिकारिण: शिष्यस्य अन्त:करणे अहं नित्य शुद्ध बुद्ध युद्ध: सत्यस्वभाव:परमानन्द रूप: अनन्तं अद्वितीयं ब्रह्मास्मि इत्येवं प्रकारेण अखण्डाकाराकारित चित्तवृत्ति: उदयो भवति । इयं चित्त वृत्ति: चित्प्रतिबिम्बंधारयित्वा प्रत्यगात्मन: अभिन्नं परं ब्रह्म विषयि करोति ,अत: ब्रह्मविषयकमज्ञानं बाधते ,तदा यथा पटस्य कारणंतन्तव:,एषा तन्तूनां दाहानन्तरं समस्तस्य पटरूपस्य कार्यस्य दाहो जायते,तथैव समस्त कार्याणां कारणस्याज्ञानस्य बाधिते सति तस्य कार्यं सम्पूर्णमपि जगत् बाधितं भवति ।तदन्तर्गतत्वेनअखण्डाकाराकारित चित्तवृत्तेरपि स्वयं प्रकाशप्रत्यगात्मना अभिन्न परब्रह्मण: अवभासने असमर्थाऽपि तद्ब्रह्म प्रकाशेन अभिभूयते ।एवन्च वृत्तिविषयं ब्रह्मापि स्वोपाधि अखण्डाकाराकारित चित्त वृत्तेर्विषयं ब्रह्मापि स्वोपाधि अखण्डाकाराकारित चित्तवृत्तेर्बाधेन दर्पणस्य मुखप्रतिबिम्बस्य मुखंमात्रमेवावशिष्यते तथैव प्रत्ययात्मनाऽभिन्नं परब्रह्मैव भवति अत: ब्रह्मैव आत्मा एवं रूपेण ब्रह्मण: ज्ञानमावश्यकं अतएवोक्तं भगवतावादरायणेन ब्रह्मसूत्रे आत्मेतितु गच्छन्ति ग्राहयन्ति च एतदभिप्रायेणैव अस्यमहावाक्यार्थस्य पंचदशी ग्रन्थे इत्यं विमर्श: कृत: विद्यते । इदं च महावाक्यं यजुशाखान्तर्गतं वृहदारण्यकोपनिषद् महावाक्यं यस्य महावाक्यार्थस्य निरूपणावसरे आदौ अहं शब्दार्थं आह् ---

परिपूर्ण:परात्मास्मिन् देहे विद्याधिकारिणि ।
बुद्धे: साक्षितयास्थित्वा स्फुरन्नहमितीर्यते ।।

अयमाशय: ----

परिपूर्ण: स्वभावतो देशकालवस्तुभिर परिच्छिन्न:परमात्मा अस्मिन् माया कल्पिते जगतिविद्याधिकारिणि शमदमादिसाधन सम्पन्नत्वेन विद्या सम्पादनयोग्ये अस्मिन् श्रवणाद्यनुष्ठानवति देहे मनुष्यादि शरीरे बुद्धेर्बुद्ध्युपलक्षितस्य सूक्ष्मशरीरस्य साक्षितया अविकारित्वेन अवभासकतया अवस्थाय स्फुरन् प्रकाश-

मानो अहमीतीर्यंत (लक्षणया अहं पदेन उच्यते इत्यर्थः ।

अथ च ब्रह्मशब्दार्थं आह ---

स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्य परामर्शस्तेन ब्रह्म भवाम्यहम् ॥

अस्यायमर्थः ---

स्वतः परिपूर्णः स्वभावतो देशकालाद्यनवच्छिन्न : पूर्वोक्तः परमात्मा अस्मिन् महावाक्ये ब्रह्म ब्रह्म इत्यनेन पदेन वर्णितः लक्षणया उक्तः इत्यर्थः। एतद् वाक्य गतेन अस्मि इति पदेन पदद्वय सामानाधिकरण्य लभ्यं जीवब्रह्म पारैक्यंपरामृश्यते । अतः इदं तावत् महावाक्यं सर्वथा जीवब्रह्म-पारैक्यं अखण्डं रूपं ब्रह्मैव बोधयति ।इति ॥

एवं बृहदारण्यकस्थं ब्रह्म वा इदमग्र आसीत तदात्मानमेवावेदहं ब्रह्मास्मि[1] इदं वाक्यं कस्मिन्नपि उपासना प्रकरणे नास्ति,अतः अभेदस्यैव निश्चित रूपेण प्रमापकं विधत्ते ।'तद्योयोदेवाना प्रत्यबुध्यत, स एव तदभवत्[2] अनेन भेदपरक वाक्य शेषणापि न तस्य कश्चित् विरोधः,यतः तत्राऽपि देवादिषु तत्त्वज्ञानिनं पुरुषमुद्दिश्य'स एव तदभवत' इत्थं ब्रह्माभेद परक्त्वैव इदं वाक्यं,न भेदपरकम्' ननूक्त वाक्ये केवलं शुद्धस्य ब्रह्मणः प्रकरणमस्ति

---

१- बृ०उ० १।४।१० ॥

२- बृ० उ० १।४।१० ॥

अत: अनेक वाक्येन जीव ब्रह्मणोरैक्यं न सिद्ध्यतीति चेन्न यत: "यो देवानाम्" अनेन जीव परामर्श परक वाक्येन उक्त वाक्ये ब्रह्मपदं कार्यस्य ब्रह्मण: बोधकम् यदि च शुद्ध ब्रह्मपरकं बोधकमिदं वाक्यं एवं स्वीकृत बोधप्रयुक्तं (तस्मात् तत्सर्वम् भवत्" एवं प्रकारेण सर्वात्मकत्वरूपस्य फलस्य कीर्तनमप्युक्तं भवेदिति एवं उपासना प्रकरणे पठितानां नामब्रह्मेत्युपासीत" इत्यादि वाक्यानां साम्यं, अनुपासना प्रकरणस्थ "ब्रह्मास्मीति इत्यनेन वाक्येन न भवितुमर्हति अत: यत्र तदन्यवत् अभेदस्य अविवदाान कर्तुं शक्यते । एवं इति शब्दस्य वैय्र्य-र्य शंकाऽपि न भविष्यति, यत: "आत्मेत्येवोपासीत"[1] इत्यादि वाक्यवत् शब्दज्ञानयो: स्वभाव सुलभस्य सकर्मकत्वस्य निराकरणंइतिशब्द प्रभावादेव क्रियते, इदं च यदुच्यते अहं शब्द: जीव व्याप्तस्य अन्तर्यामिण: मुख्य रूपेण बोधक:, यत: "अहं मनुरभवं सूर्यश्च[2] इत्यादि स्थलेषुअहं शब्द: अन्तर्यामिण: बोधार्थमेव प्रयुक्त: वर्तते ।आगमेऽपि एतदेवोक्तम् ----

"सर्वान्तर्यामिको विष्णु: सर्वनाम्नाभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपत: ॥

अयमाशय: ---

सर्वान्तर्यामि भगवान् विष्णुरेव "एष" "अहं" "त्वं" "असौ" इत्यादि सर्वनामपदै: अभिहितो भवति । "न सर्वं भावापत्ति कारणादिति ।" तच्च कथन-मपि नोचितं यत: शास्त्रदृष्ट्या तूपदेशो वामदेववत्[3]" इत्यस्मिन सूत्रे अयं सिद्धान्त:

---

1- बृ०उ० १।४।७ ॥

2- बृ०उ० १।४।१० ॥

3- ब्र०सू० १।१।३० ॥

स्थिरीकृत:,यत् वामदेवादि: यदिदं उक्तवान् "अहं मनुरभवं सूर्यश्च" तद् तस्योपदेश: "अहं ब्रह्मास्मि" इत्येव प्रकारेण जीवब्रह्माभेद विषयिणी या शास्त्रीया दृष्टि: स एव यत: "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" अस्मिन् पूर्ववाक्ये तत्त्वज्ञानप्रयुक्तब्रह्मभावम् उद्देश्य इदमुच्यते "तद्धैतद्पश्यन्नृषिर्वामदेव: प्रतिपेदे" अत: वामदेवस्यापि इदं दर्शनमपि बोधनिमित्तकं ब्रह्म भावपरकमेव ,नान्तर्यामिपरकम् ।उक्तस्यागमवाक्यस्यापि न कमपि विरोध: उपस्थितो भवति,यत: अहं शब्दस्य तत्तद् असाधारणजीवात्मन्येव शक्ति: अभ्युपगन्तव्या: भवति,तस्य सहचारी अन्तर्यामि एवं तत्सह चरितत्त्वनिमित्तमादाय अहं शब्दस्य गौणीवृत्त्यान्तर्यामिण्यपि भवति,"एषोऽहम्" अयं च य: स्वरूपैक्यस्य निषेध: "न सर्वस्वरूपत:" इति तद् अहंत्व एवं अन्तर्यामित्व रूपोपाधि विशिष्ट स्वरूपापामैक्यात्" अयं च य: आक्षेप: कृत: यत् वामदेवस्य "अहंमनुरभवं सूर्यश्च इति तत्कथनं न संगतम् ,यत: विशिष्ट चैतन्य रूपे वामदेवे विशिष्ट चैतन्य स्वरूपमनु सूर्ययो: अभेदस्यासंभवात् इति । तच्च आक्षेप: ज्ञातोऽपि निरस्तं भवति यत् तत्र सूत्रकार: इम: निर्णयं कृतवान् ,"शास्त्रदृष्ट्या तू पदेश" अर्थात् शास्त्रबोधितस्य शुद्ध चैतन्यस्य एकतां बुद्धौ निधाय तथा उक्तवान् विशिष्ट चैतन्यानां न एकतामादाय ।

यदि च मनु सूर्ययो: शुद्ध चैतन्येन सह ऐक्यं विविक्षितं तदा वामदेवेन शुद्ध चितिमनुरभवत् सूर्यश्च,एवं वक्तव्यं भवेत्,अहमभवं एवंकथमवदत ? अस्यप्रश्नस्य इदं तावदुत्तरं यत् भूतभुवंगतिमादाय स्थाणु चौर: इति वत् व्यवहार: भवितुमर्हतीति।

---

१- बृ०उ० १।४।१० ।।

२- बृ०उ० १।४।१०,।।

३- बृ०उ० १।४।१० ।।

४- ब्र०सू० १।३० ।।

अतः अहं ब्रह्मास्मिति वाक्यं अभेद बोधकमेव इत्येवं पूर्वपक्षो अयं तावद् सिद्धान्तः मध्व मतानुसारेण उच्यते तथाहि -"अहं ब्रह्मास्मि" इदं बृहदारण्यकस्थं वाक्यं ना भेद बोधकं किन्तु भेद बोधकमेव यतः इदं तावद् महावाक्यं शुद्धस्य ब्रह्मणः प्रकरणे पठितःअतःअनेनावाक्येन जीवब्रह्मणोरैक्यं न सेत्स्यति,अपि च यथा "नामब्रह्मेत्युपासीत[1]" "आदित्यो ब्रह्मेत्यादेशः[2]" इत्यादि वाक्येषु ब्रह्म" इत्यस्य पदस्यानन्तरं"इति शब्दस्य प्रयोगः कृतः । स एव इत्थं ज्ञापयति यथा नामादिना सह ब्रह्मणः अभेदो नास्ति तथैव अहंब्रह्मास्मीति[3]त्यत्रापि इति परकं ब्रह्म इति पदं प्रयुक्तं अतःअत्रापि ब्रह्मणा सह अभेदो नास्ति इत्येवाभ्युपगन्तव्यः ।

अपि च उक्तप्रकारेण एकपदलक्षणया ब्रह्म साहचर्यादिना जीवे ब्रह्मेति व्यपदेशस्य वा साह्यादिना ब्रह्मणि अहमिति व्यपदेशस्य वा उत्पत्तौ पदस्य लक्षणया ऐक्यपरत्वासंभवात् अपि च अहमिति शब्दः मुख्य रूपेण जीवव्याप्तस्य अन्तर्यामिणः एव मुख्य रूपेण बोधकम् । यतः "अमनुरभवं सूर्यश्च[4]" इत्यादि स्थलेषु सर्वत्र अहं शब्दः अन्तर्यामिण्येव प्रयुक्तो वर्तते ।अत्र आगमोऽपि प्रमाणं भवति तथाहि -----

सर्वान्तर्यामिको विष्णु सर्वनाम्नाभिधीयते ।
एषोऽहं त्वमसौचेति न तु सर्व स्वरूपतः।।इति।।

---

१- छा०उ० ७।१।५ ।।

२- छा०उ० ३।१९।१ ।।

३- बृ०उ० १।४।१० ।।

४- बृ०उ० १।४।१० ।।

अयंभाव: -अत्र हि सर्वान्तर्यामि भगवान विष्णुरेव एष, अहं , त्वं, असौ इत्यादि सर्वनाम पदै:अभिहित: । एवं भवतां पक्षेऽपि नहि विमिष्ट चैतन्यरूपो वामदेवो विशिष्ट चैतन्यरूपमनुर्सूर्या दिर्भवति । एवं अहं मन्वादि शब्दैचैतन्यमात्रे लक्षणायां उत्तम पुरुषप्रयोग: ।

अपि च अहं भूमि अददामार्याय इत्यादि प्रयोगा योगश्च ,नहि शुद्ध चैतन्यमात्रं भूमिमदात् । किन्तु भगवान विष्णुरेव इन्द्राय भूमिमदात तस्यादहं नामाभवत् तत्त्योपनिषदहमिति , अहं नामाहरिर्नित्यमहेयत्वात् प्रकीर्तित: इत्यादि श्रुतिश्च एवं श्रुत्यन्तरे ऽपि अहं तौजोरश्मिन्नारायणं पुरुषं जातमग्रत: तमिममहं विजानाभीति अर्थे अयं शब्दप्रयोगाच्च अन्यथा अहं विजानामीति प्रयोग: स्यात्। ततश्च अन्तर्याम्यैक्यमेवाभोच्यते उक्ता च अन्तर्यामिपि नियम्यानन्त्यादिना भेद प्रसक्ति: तथा च श्रुत्यन्तरं तथाहि -स यश्चायं पुरुषो यश्चासौ आदित्यें स एक: इति अन्यथा य एष आदित्ये पुरुषो दृश्यते सोऽहम स्मीति छान्दोग्ये स एवान् ब्रह्म गमयतीति भेद परोपर वाक्य विरोध:स्यात् ।

किंच स य एतं विद्वान् उपास्ते इत्युत्तर वाक्ये उपास्ति श्रवणात् त्वन्मते च उपास्यस्य आरोपितत्वात् नानेन ऐक्य सिद्धि: । योऽसावसौ पुरुष: सोऽमस्मि वायु रितीशावास्योपनिषदि च वायुरनिलममृतम् भेद मस्यान्तं शरीरं इत्युत्तर वाक्य विरोध: नहि शरीरादेरपि जीवैक्यं हे अग्ने नयसुपथा राये अस्मान् इत्यादि भेदपरोत्तरवाक्यं विरोधश्च । तथोऽहं सोऽसौ सोऽसौ सोऽहं रितिभेदपरोत्तरमन्त्रविरोध: । ब्रह्म मित्येतरेयै च चक्षुर्मित्रस्य वरुणस्याग्नें बृहदारण्यके च तथा यो देवानां वा इदमग्र आसीत्तदात्मानमेवा वेदहं ब्रह्मास्मीति

प्रत्युयुध्यत तथा ऋषीणां तथा मनुष्याणामिति भेदपरवाक्यशेष विरोध:। किं चात्र वाक्ये ब्रह्मण एव प्रकृतत्वात् नानेन जीवब्रह्मैक्यसिद्धि: ।"य एवं वेदाहं ब्रह्मास्मी" युत्तरवाक्ये त्विति शब्द योगात् त्वन्मते चेति शब्दयुक्तानाम् आदित्यो ब्रह्मे त्यादीनामुपासनार्थत्वात् ।"अ योऽन्यां देवतामुपास्ते" इत्युत्तरवाक्ये उपासित श्रवणाच्च नानेनैक्यसिद्धि: ।

अपि च अहं ब्रह्मास्मि" इत्यस्मिन महावाक्ये ब्रह्मशब्द: वृंहणार्थक: अत: अहं ब्रह्मास्मी" इत्यस्यायमर्थ: स्वीक्रियते,अहं शरीरादि वृतिकारक:" अत: उक्ते वाक्येन जीवब्रह्मणारभेद नहि सिद्ध्यति: अन्यथा जीवब्रह्मणारैक्यं आत्मानमेवावेद[1] अत्यास्मिन् पूर्ववाक्येन एव सिद्ध: । अत: अहं ब्रह्मास्मि इत्यनेन वाक्येन जीवब्रह्मणारैक्यं प्रतिपादनं व्यर्थम् ।

अपि च योऽन्यां देवतामुपास्ते" इत्यस्यवाक्यस्याय मर्थ:"योऽन्यो जीवो अन्यां विलक्षणां देवतामुपास्ते अन्यो असौ परमात्मा अहमस्मीति न स वेद" यथा पशु: इत्यर्थ: अन्यथा अहमर्थस्यापि विशेषत्वे देवतामुपाहते इत्युक्तम् । एतदेवाभिप्रेत्य न्यायामृतकारै: उच्यते - न च व्यवहितान्वयदोष:, यस्य येनार्थसम्बन्ध इति न्यायेन सन्निधानायोग्यताया: प्रबलत्वात् ।अथवा स्वातन्त्र्यणाऽन्यसद्भावनिषेधायश्रुतिस्त्वयम् ।"अन्योऽसावन्योऽहमस्मीति पश्यन्नज्ञ इति स्म हे ।आह तद् ब्रह्मणोऽधीना भिन्ना जीवास्तु सर्वश:"इत्यादि स्मृते: स्वातन्त्र्यज्ञानी पशुरित्यर्थ: ।केचितुपास्त इत्यादि श्रवणात्पूंप्रयत्नसाध्य ज्ञानविजातीय वृत्त्यंतररूपोपासनाया एव निषेध:,न तु ज्ञानस्येत्याहु: ।"स यो ह वैतत्परमं ब्रह्म वेदं ब्रह्मैव भवती"त्यत्रापि द्वितीयो ब्रह्मशब्दो जीवपर: ।ब्रह्मणि जीवा सर्वेऽपि मा वृहजादि जीव कमलासन शब्दराशिष्विति वचनात् । ब्रह्मण जीवा सर्वेऽपि इत्यादि स्मृतिश्च । एवं हि ब्रह्मणी वेदितव्ये" इत्यादि स्थले जीवे एव ब्रह्मप्रयोगाच्च ।तथा च य: परमं ब्रह्म वेद स जीव एव भवति न तु परब्रह्मेत्यर्थ: । अतएव

आद्यो ब्रह्मशब्द परमत्वेन विशेषितः । यद्वा ब्रह्म भवति बृंहितत्वरूप ब्रह्मत्वाक्रान्तो भवतीत्यर्थः। सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत इतिवत् नहि शूद्रः स्वपूज्य ब्राह्मव्यक्तिरेव भवति किन्तु ब्राह्मणत्वं जात्या क्रान्तः,ब्रह्मण्यपि ब्रह्म शब्दस्य बृंहणार्थत्वात् : ब्रह्मत्वं बृंहितत्वं स्यात् जीवानां च परात्मता इति स्मृतेश्च । अस्य महिमानं इतिवीतशोक इति वाक्य शेषाच्च ।अन्यथा पूर्वम नन्द स्यन्दमानाःइति भिन्ननदी सनुत्कृष्टान्तोक्तिः ।परात्परपुरुषमपैति दिव्यमिति ब्रह्म प्राप्त्युक्तिश्चायुक्ता स्यात् ।

किंच त्वत्पक्षे नित्यं ब्रह्मभूतस्य अपूर्व ब्रह्म भावोक्ति रयुक्ता, आरोपनिवृत्तेः साध्यत्वेऽपि अशाब्दत्वात् ।

अपि ब्रह्मैव सन् ब्रह्माप्येति इत्यत्रापि श्रुतौ जीव एव सन् ब्रह्म प्राप्नोति इति कर्मकर्तृभावेन भेद एव उच्यते ।कर्माणि विज्ञानमयश्चात्मापरे व्यये सर्वे एकी भवन्ति इत्यत्रापि एकीभावः स्थानैक्यं मत्यैक्यं सादृश्यं वा न स्वरूपैक्यं --

अविरोधश्च सादृश्य मेक देशस्थितिस्तथा
एकी भावस्तथा प्रोक्तो नैकीभावस्वरूपयो

इति वचनात् ।

अत्र हि परे व्यये सर्वे एकी भवन्ति इत्यतया श्रुत्या यद अभेद वादिभिः अभेदः प्रतिपाद्यते तत्र समी चीनम् यतः स्थानैक्यं मतैक्यं सादृश्यं एतत्

निमित्तत्रयमादाय गौणी वृत्त्या एकी भावस्य व्यवहारः उपपद्यते (१) यथा गावः सामं गोष्ठे एकी भवन्ति (२) एकीभूता नृपासर्वैववर्षु : पाण्डवंशरैः (३) कीटो भ्रमरेण एकीभूतः । एवं प्रकृतेऽपि उक्त निमित्तत्रयमादायैव जीव ब्रह्मणोरपि गौणत्वेनैव एकीभाव संभाव्यते , वस्तुतः । एवं कर्माणि विज्ञानमाक-श्च "इत्यान्नापि अत्रो पुण्यपापादि पुण्य पापानि सर्वाणि कर्माणि विज्ञा-नात्माश्चजीवः परब्रह्मणा सह एकीभावः प्राप्नुवन्ति । अत्र हि कर्मणः एकीभावः कर्मनिवृत्तिः ।जीवस्य एकीभावः अभेदः अतः सकृदुच्चरितस्य एकीभावः इति शब्दस्य अर्थद्वयं कर्तव्यं भविष्यति, कर्मनिवृत्ति रभेदश्च ।

अपि च भगवताद्वैतिनां मते जीव ब्रह्मणोः एकीभावः सदैव नाने-कीभावः तदा एकीभवन्ति इत्यत्र च्वी प्रत्ययस्य प्रयोगो न संभविष्यति यतः (कृभ्वस्ति योगे सम्पद्यकर्तरि च्वीः)पा० ५।४।५० इत्यस्मिन् सूत्रे भगवता भाष्य-कारेण इदनुक्तम्,यत् च्वी विधावभूत तद्भाव ग्रहणं कर्तव्यं इह मा भूत् सम्पद्यन्ते यवाः,सम्पद्यन्ते शालयः इति । एवमत्र हि सूत्रस्थस्य सम्पद्य कर्तरि इति शब्दस्य अभूत तद्भावार्थे लक्षणा कर्तव्या,अतः अतद्रूपस्य वस्तुनः तद्रूपतायां सत्या-मेव च्वी प्रत्ययो भवति,तथाहि अब्रह्म ब्रह्म भवती-ब्रह्मी भवति,अनेकः एको भवति-एकी भवति । यदा जीव ब्रह्मणोः कदापि जीव ब्रह्मणोरनैक्यं भेदो वा नास्ति तदा जीवमुद्दिश्य ब्रह्मी भवति अथवा एकी भवति इति न वक्तुं शक्यते ।नान्यन्त-र्यामिप्रकरणस्थं नान्योऽतोऽस्ति द्रष्टेति वाक्यं अक्षरप्रकरणस्थं नान्यदतोऽस्ति द्रष्टृ इति वाक्यं चैक्ये मानम् ।अत इत्यनेन प्रस्तुतं सर्वनियन्तारं परः मृश्यान्यो द्रष्टा नास्तीत्युक्त अस्मिन् ग्रामे अयमेव सर्वनियोजकः,नान्यः पुरुषोऽस्तीत्या-दावन्यशब्दस्य प्रस्तुत सदृशान्यपरतया व्युत्पन्नत्वेनेहापि सर्वनियामकः द्रष्टन्तर निषेधात् ।उक्तं हि -" समानमितरच्छ्येनेनेत्यत्र इतरशब्दस्य पूर्वनिर्दिष्टसदृश

परत्वं । एवं च कन्दर्पः सुन्दरो लोके नान्योऽस्तीह पुमानित्युक्ते कन्दर्पाताऽन्यः पुमान्नेति न प्रतीयते किन्तु कन्दर्पसदृशः सुन्दरो नेति भासते । एवं परात्मसदृशद्रष्टृभावोऽत्र भासते ।अन्यथा अन्तर्यामिवाक्ये य आत्मनोऽन्तरः , यमात्मा न वेद, यस्यात्मा शरीरं य आत्मानमन्तरो यमयतीति पूर्ववाक्येन "एष त आत्मान्तर्याम्यमृतः अतोऽन्यदार्तं मित्युत्तरवाक्येन च विरोधः ।तत्र परमात्मनोऽन्यं चेतनमङ्गीकृत्य तस्यार्तिमुक्तत्वेनास्वातन्त्र्यस्यैवोक्तेः ।अक्षर वाक्ये च "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि पूर्ववाक्येन विरोधः स्यात् द्वितीयाद्वै भयं भवतीत्यस्यापि विरोधिनः समानाद्भयं भवतीत्येवार्थः लोके तादृशादेव भयदर्शनात । अस्य च लोकसिद्धानुवादित्वात् ।"समाना द्वि भयं भवेदिति स्मृतेश्च । पूर्वत्र "तस्मादेकाकी बिभेती"ति उत्तरत्र च तस्मादेकाकी न रमते" इति श्रवणाच्च । यदा ह्येवैष "एतस्मिन्नुदरमन्तरं कुरुते" इत्यत्रापि एतस्मिन्निति विशेषणात् स्वगतस्यैव भेदस्य निषेध । एवं "एको देवः सर्वभूतेषु गूढ" इत्यादि श्रुति, "एक एव हि भूतात्मा भूते भूते व्यवस्थितः" इति स्मृतिश्चान्तर्याम्येकपरा ।भूतशब्दस्य "यतो वा इमानि भूतानि जायन्ते यत्प्रयन्त्यभिसंविशन्ती"त्यादाविव चेतनपरत्वात् ।

तस्मात् अहं ब्रह्मास्मीति बाह्यवाक्यं नाभेदे प्रमाणमिति ।

## मोक्षस्वरूपम्

अथ इदानीं मोक्षस्वरूपं निरूप्यते तत्र वादिनां विविधा विप्रतिपत्तयः दृश्यन्ते ।केचन ज्ञानादेव कैवल्यं प्राप्यते इति मतमाश्रित्य ज्ञानैकसाध्यत्वं मोक्षस्य इति वदन्ति । केचन तार्किका आत्यन्तिक सर्वदुःखनिवृत्तिरेव मोक्ष इति वदन्ति,अत इमं विषयमधिकृत्य विशेषतो विचार आवश्यकः

अतएव भवतीयं जिज्ञासा कः तावद् मोक्ष पदार्थः इत्यतः अत्र किंचिद् प्रस्तूयते अत्र सौगताः नीलपीताद्याकारं रागद्वेषादि दोषैर्विशय विभ्रमैश्च प्रवृत्ति रूपकलोदय पर्यन्तैः दूषितानि यानि विज्ञानानि तेषु तत्त्व परिभावनया निवृत्तेषु विभ्रमेषु विशुद्ध विज्ञानधर्मलक्षणोदयो मोक्षः । एवं विषयाकारोपप्लुत विज्ञान सन्तानो परमो मोक्षः । उक्तंहि ---

'प्रदीपस्यैव विज्ञानं विमोक्षः तस्य तायिनः' ।

तत्र पूर्वलक्षणं योगाचारादीनां मतानुसारेण द्वितीयं तु लक्षणं माध्यमिकानां रीत्या बोध्यम् ,तन्न समीचीनम्,उक्तरूप विज्ञानोदयः सन्तानिक क्षणस्य पुरुषार्थश्चेत् तस्य स्वरसतः विनाशात् फलिनो अभावात् फलाभावात् न च उक्त पुरुषार्थः सन्तानस्यैव तादृश सन्तानोदयेऽपि मोक्षारूपप्लुत सन्तानरूपस्योपरमात् बन्ध मोक्षयोर्वैयधिकरण्याच्च एवं विज्ञान सन्तानो परकोऽपि मोक्षः न युक्तः अपुरुषार्थत्वात्,ज्ञान सन्तानस्य आत्मरूप तया तस्य च अपुरुषार्थत्वात् एवं विध सर्वप्रियात्मध्वंस रूपे मोक्षे न कस्यचिदपि प्रवृत्तिः स्यात्, न हि बद्ध नाशः एव मोचनार्थे मुक्तिरिति युक्तं,अपितु स्वतः एव बन्ध विश्लेषः किन्च विशुद्ध विज्ञानोदय पक्षे नोभयोः किन्चित् कारण मुपपद्यते सर्वस्याऽपि क्षणिकत्वात्,सन्तानस्य च अवस्तुत्वात् सन्तानिनो विज्ञान क्षणस्य च प्रतिक्षणमुत्पद्युर्वोत्पन्नत्वात्,किं च इत्यादि प्रमाणेभ्यः आत्मनः स्थिरत्वे सिद्धे सौगतमतस्य निरस्तत्वात् न तन्मतानुसारेण मुक्तियुक्ता ।

ननु: एकविंशति दुःखध्वंसो मोक्षःइति तार्किक मतमेव युक्तम्, तथाहि एकविंशति प्रकारं दुःखं इन्द्रिय षादकं बुद्धिषादकं,शरीरं सुखं -दुःखं एतेषां दुःखानामात्यन्तिकी निवृत्तिरिति मोक्षः इति चेन्न,एतन्मतस्याप्य युक्तत्वात् , अतः तन्निवृत्तिःनहि पुरुषसाध्या एवं वर्तमानमपि दुःखं विरोधि गुणानां प्रादुर्भावादेव निवर्तनीयम् एवं भाविना दुःखस्याविद्यमानत्वात् नहि तन्निवृत्ति रपि पुरुष साध्या,अत्र हि निवृत्तेः विशेषणेन आत्यान्तिकत्व शब्देन निवृत्ति

दु:ख जातीय दु:खस्य यः अनुत्पादः उक्तः सोऽपि प्रागभाव रूपः स चा नादिः,अतः तदुत्पत्तये उपायानुष्ठानं व्यर्थम् । न्यायलीलावतीकारेणाऽपि उक्तम् किं दु:खानामत्यन्ताभावमोक्षः इति । अत्यन्ताभावस्य नित्यत्वात् , नहि तस्य साध्यत्वं अयं संशयो न कर्तव्य इति तस्य असाध्यत्वेऽपि तस्यात्मना सह सम्बन्धः अवश्यसाध्यः दुखात्यन्ताभावस्य आत्मन सम्बन्धस्य च इदं तावत् स्वरूपं यदशेष क्लेश हेतु नाशः इति यतः अशेष दु:ख नाशस्य उत्पत्तौ सत्यां दु:खात्यन्ताभावे आत्म सम्बन्धित्वस्य व्यवहारो दृश्यते ।आत्म सम्बन्धित्व व्यावहारस्य हेतोरेव क्लेश हेतु नाशोऽपि विषय विषयिभावा विवत् सम्बन्धः वक्तुं शक्यते । सच क्लेश हेतु नाशः कृतकत्वेऽपि ध्वंस रूपत्वात् अविनाशी भवति एवं अत्यन्ताभावस्य प्रतियोग्यपि दुर्निरूप्यः नैवं वक्तुं शक्यम्,यतः मुमुक्षु सम्वेत संभावनाप्राप्त दु:खमेव तस्य प्रतियोगी ।संभावनायाः स्वरूपं इदमस्ति योगाभ्यासस्याविद्यमानता दशायां दुरित प्रवाह भाविता दु:खोत्पादकःभविष्यति,सर्वैरात्यन्ताभावस्य निरूपणे प्रतियोगिसिदैव सामान्यतः ज्ञाताएवं विशेषतः संभाभावना ज्ञानस्यैव विषयो भवति । यतः विशेषतः प्रतियोगिनः सद्भावस्य निश्चयःअपेक्षिते अत्यन्ताभावस्य निरूपणं व्याहृतं भविष्यतीति । एवं एतज्जीवनिष्ठ दु:खसमान कालीनदु:खध्वंसातिरिक्त एतन्निष्ठदु:खध्वंसो मुक्तिः । एतन्निष्ठदु:ख प्रागभावासमानकालीनैतन्निष्ठदु:खध्वंसो मोक्षः । एवं ज्ञानाजनक संस्कार जनक जन्य साक्षात्कार विषयो दु:खध्वंसोमोक्षः इत्यादि तार्किक मत । सिद्धानि लक्षणानि तत्वप्रदीपिकायाप्रपपाद्य सम्यक् खण्डितानि। एवं प्रकृति पुरुष विवेक दर्शनात् पुरुषस्य स्वरूपावस्थानं मुक्तिः रिति यत् सांख्य मतं तदपि न युक्ति सहम् ,सुखसाक्षात्कारस्यैव पुरुषार्थत्वोपपादनात् आत्मनश्च सुखत्वानभ्युपगमान्न पुरुषस्य स्वरूपवस्थानं पुरुषार्थः ।किन्च वन्धमोक्षयोर्वैयधिकरण्याप्रातः पुरुषस्य नित्यमुक्तत्वाद् वन्धनस्य च बुद्धिगतत्वाङ्गीकारात् ।

नच --

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थंप्रति विमोचयत्येकरूपेण[1] ।।

इति दर्शनाद् उपचाराद् बुद्धिगतावेव बन्धमोक्षौ पुरुषेण व्यपदिश्येते इति वाच्यम्, विभिन्नाभावाद् उपचारानुपपत्तेः, उदासीनस्य च स्वस्वामिभावादेर्निमित्तस्य सम्भवाभावादिति ।

चार्वाकमतम् :---

अस्मिन् मते पारतन्त्र्यमेव बन्धः, स्वातन्त्र्यमेव मोक्षः इति अस्मिन् मतेऽपि स्वातन्त्र्येण दुःखस्य निवृत्तिरेवावबुद्ध्यते तदापि न कश्चित् विवादः यतः अन्यापादावलम्बिनोऽपि दुःखोच्छेदमेव मुक्तिं मन्यन्ते, किन्तु यदि स्वतन्त्रतायाः ऐश्वर्यमर्थः तदापि कश्चिदपि प्रेक्षावान् पुरुषः इममर्थं न स्वीकर्तुं शक्नोति, यतः कश्चिदपि पुरुषः ऐश्वर्यस्यातिक्रमणं कर्तुं शक्नोति अथवा तत्समोऽपि भवितुमर्हति । मोक्षस्तु एवं भवितव्यः यत् न च तस्मात् कश्चिदपि शयो भवेत् न च न्यूनो भवेत् । शब्दान्तरेण परमपुरुषार्थः एव निरतिशयः तथा निरुपमः भवितुमर्हति । किन्तु ऐश्वर्यस्तु सातिशयो भवति । यतः एकस्य राज्ञः ऐश्वर्यापेक्षया अन्यस्य राज्ञः ऐश्वर्यमुत्कृष्टं भवति अतः एवं विधः ऐश्वर्यात्मिकः मोक्षः नादरणीयः ।

---

१- सां०का० ५६ ।।

भट्टमतम् -- नित्यनिरतिशयसुखाभिव्यक्ति:मुक्तिरिति परन्तु नित्यसुखं न प्रमाणपद्धतीमध्यास्ते । ननु तत्र श्रुतिरेव प्रमाणं भवितुर्हतीति ,चेन्न ,यत: योग्यानुपलब्धि प्रमाण बाधिते श्रुतेरनवकाशात्,अवकाशे वा यथा प्रस्तरा:तरन्ति इतिवाक्यवत् अत्रापि वाक्ये मुख्यार्थमहायैव प्रामाणिकत्वं स्वीकृतं व्यम् ।

जैनमतम् -- मिथ्यादर्शनादिबन्धस्य कारणम्,तन्निरोधेसति नवीनानां कर्मणामभावात् निर्जरारूपिण:कारणस्य सम्पर्कात् पूर्वोपार्जितानां कर्मणां विनाशो भवति तर्हि सर्वप्रकारकर्मभि: आत्यन्तिक: पूर्णरूपेण मोक्ष: जायते अयमेव मोक्ष: ।उक्तञ्च बन्धस्य कारणाभावात् (सम्बरेण) एवं संवरनिर्जराभ्यां सर्वै: कर्मभि: विमुक्त: एव मोक्ष: ।तदन्तरं प्राणिरूर्ध्वं गच्छति ,यावत् लोकस्यान्तं न मिलति एवं जैनदर्शनमते मोक्षस्य कारणद्वयं संम्बर: निर्जरा च संवरेण आश्रव: (कर्मोदय:)निरुध्यते अर्थात् नवीन कर्म नोत्पद्यते । एवं निर्जरारूपेण कारणेन पूर्वोपार्जित कर्मणामालयस्य विनाशो भवति । एवं प्रकारेण सर्वकर्मबन्धनै:प्राणी विमुच्यते ।अयमेव मोक्ष: ।एतस्माद् विपरीत: कर्मसम्पृक्त: एव बन्ध: ।इति ।

अद्वैतमतम् --- अद्वैताधान्ते ब्रह्मभावश्च मोक्ष:,स च अविद्यास्तमयरूप: स्वीक्रियते:,अविद्या च आत्मनस्तिरोधान बन्ध: एवं च द्विविधेव बन्ध: उक्तञ्च नयनप्रसादिन्याम् ----

"सत्यज्ञानानन्तानन्दैकरसब्रह्मात्मनोऽविद्यातिरोधानं बन्ध: , विद्या तन्निवृत्तिश्च मोक्ष: ,[१] ननु केयमविद्यानिवृत्ति:सद्रूपा सद्रूपा उभयरूपा

---

१- चित्सुखी पृ० ६०२ ।।

अनिर्वाच्या वा पञ्चम प्रकारा वा आत्ममात्रवेति । नाद्यः प्रथमे यदि आत्मनः अतिरिक्ता तदाद्वैतापत्तेः आत्मानतिरिक्तत्वे तस्याः सदा निवृत्तेः संसारानुपलब्धि प्रसङ्गात् । नापि द्वितीयः असद्रूपतायां खपुष्पादिवत् ज्ञानाधीनत्वासंभवात् । न तृतीय विरोधात् । न च तुर्थः अविद्यातत्कार्ययोरन्यतरत्वापातात् नाप्यात्ममात्रमविद्यानिवृत्तिः एवं सति सदा निवृत्त्या संसारानुपलब्धिः स्यात्, तस्मान्नाज्ञाननिवृत्तिरुपपन्नेति यत् न निवृत्तिरात्मैवाहस्य ज्ञातत्वेनोपलक्षितः। उपलक्षण नाशेऽपि स्या मुक्तः पाचकादिवत् ।[1]

यथालोके पचनादि क्रियानिवृत्तावपि पाचकः इति प्रतीयते व्यवह्रियते च तथा इहापि उपलक्षणस्य ज्ञातत्वस्य नाशेऽपि मुक्तिः स्यादिति आत्मैवाज्ञान निवृत्तिरित्येकपक्षः समीचीनः । तत्र न केवलमात्मैव निवृत्तिः अपितु ज्ञातत्वेनोपलक्षितः एव सः उक्तञ्च तत्त्वप्रदीपिकायां इहापि अनृतदुःखात्मद्वैतविरोधि सत्यज्ञानानन्तानन्दाद्य लक्षणं ब्रह्मैव वेदान्तवाक्यजनित ब्रह्माकाराान्तः करण परिणाम दर्पण प्रतिबिम्बितं प्रसविलासाज्ञाननिवृत्तिरित्यभ्युपगन्तुम्[2] । एवञ्च आत्मरूपा अविद्यानिवृत्तिरितिपक्षे संसारानुपलब्धिरूपो दोषः निरस्तः ज्ञातत्वस्योपलक्षणात् । अविद्यानिवृत्तेश्च नित्यत्वात् न संसारस्य पुनरुज्जीवनोदयो दोषाः प्रादुर्भवन्ति, यतः शुक्ति सकृत्मादौ शुक्ति साक्षात्कारेण निवृत्तस्याज्ञानस्य तत्कार्यस्य वा पुनरुन्मज्जनादर्शनात् । पुनरुद्भवो रजतादि विभ्रमस्याज्ञानान्तराधीनत्वात् ।

यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमात् । इह च भूयश्चान्ते विश्वमाया निवृत्तिरिति श्रुतेः तत्त्वज्ञानेन सम्पूर्णस्य सविलासस्याज्ञानस्य नाशे न पुनः संसारोन्मज्जनप्रसङ्गः शंका ।

---

१- चित्सु० - ६२४ ॥

२- चित्सु० - ६०२ ॥

ननु अज्ञाननिवृत्तिरात्मरूपैव इत्यत्र किं प्रमाणमिति चेन्न, श्रुतेरेव प्रमाणत्वात् तथाहि - "यस्मिन् सर्वाणि भूतानि आत्मैवाभूत् विजानतः । -- 'यत्रत्वस्य सर्वमात्मैवाभूत्' इत्यादि श्रुतिः प्रमाणम् । तत्र आत्मरूपत्वपरा एवं विधाः श्रुतयो मुख्यार्थतया आञ्जस्येनोपपद्यन्ते अतएव ---

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्यज्ञानसुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः ।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ।।[1]

इति श्रीमधुसूदनसरस्वतीभिरद्वैतसिद्धौ मंगल एवोक्तम् । तत्रैव च मोक्ष पदार्थनिर्णयावसरे लघुचन्द्रिकाकारा अपि प्राहुः - " अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः" "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" ।अविद्यास्तमयः संस्कारादिरूपप्रपञ्चानवस्थानम् । सा च स्थूलरूपा संस्कारादिरूपा च ।तथा च विदेहताकालीनोऽस्तमय एव मुख्यो मोक्षः ।ज्ञातत्वोपलक्षित आत्मापि विदेहताकालीन एव ।तत्र अविद्यास्तमयो मोक्ष इत्यनेन वाक्येन वार्तिकेन अविद्यारूपप्रबन्धशून्यत्वस्य मोक्षपदार्थत्वमुक्तम् । द्वितीयेन तु वार्तिकेन तादृशमोक्षपदार्थस्य ज्ञातात्मत्वोक्त्या आत्मरूपताबोध्यते, अविद्यारूपबन्धाभावस्याधिकरणरूपत्वात्। एवञ्चाभ्यां वाक्याभ्याम् अविद्यारूपबन्धशून्यात्मनो मोक्षपदार्थत्वं सिद्धम् । ज्ञातत्वञ्च अखण्डधीविषयत्वम् । तच्च तत्रोपलक्षणीभूतमिति ।तदुपलक्षितत्वा च

---

१- अद्वैतसिद्धिः ।।

स्वपूर्वकालीन प्रतियोगिसमानाधिकरणतदभाववत्त्वं तत्सम्बन्धोत्तरकालीनतत्समानाधिकरण तदभाववत्त्वं वेत्यादि तत्रैव विट्ठलेशोपाध्यायीयां स्पष्टम् ।एवन्चाविद्यानिवृत्तिर्मोक्षः, सा चात्ममात्रमिति पक्षोऽवस्थितः । स एव मोक्षः। तच्च स्वप्रकाशचिदभिन्न सुख रूपं इत्यैव अद्वैतिनां परमो राधान्तः ,अत्रोच्यते सिद्धान्तिना मध्वाचार्येण तथाहि ----

मध्वमते भक्तिप्रपत्तिभ्यां ईश्वरः प्रसन्नो भवति ततश्च ईश्वरप्रसादेनैव मोक्षः प्राप्यते उक्तं हि महावराहे ---

मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतौपरे ।
उत्कर्षे तु तदन्यत्र तात्पर्यस्यादवान्तमिति ॥

युक्तं च विष्णोः सर्वोत्कर्षे महातात्पर्यं,यतः धर्मार्थ काममोक्षाख्येषु चतुर्विध पुरुषार्थेषु मोक्षः एव परमः पुरुषार्थः उक्तं हि भाल्लवेयश्रुतौ ।

धर्मार्थकामाःसर्वेऽपिननित्या मोक्ष एवहि ।
नित्यस्तस्मात्तदर्थाय यतेत मतिमान्नरः ॥

इति। एवंरूपः मोक्षः विष्णुप्रसादमन्तरेण न लभ्यते,विष्णुप्रसादश्च भगवद्गुणोत्कर्षज्ञानादेव नाभेद ज्ञानाद् यथा अद्वैतिनः मन्यन्ते । अद्वैतिनां मतानुसारेण मुक्तौ वैशेषिकादिवत् नहि दुःखोच्छेदमात्रं अपितु निरतिशयानन्द परिस्फुरणरूपमपि यथाचोक्तम् ---

तस्मादाविधास्तमयो नित्यानन्दप्रतीतितः ।
निःशेष दुःखोच्छेदाच्च पुरुषार्थः परो मतः ।। इति ।।

तत्सुखरूपं- न परमो पुरुषार्थः यतः पुरुषाणामभिलाषः अहं सुखी स्यामित्येषानुभूयते, सुखं स्यायित्येव प्रतीतिर्न जायते ,यतः इच्छैव हि पुरुषार्थतायाः नियामिकाभवति अर्थात् ,येन रुपेण यस्य धी विषयत्वं तेन रुपेण तस्य पुंसः इच्छाविषायत्व व्याप्यं तेन रुपेण तस्य पुंसः पुमर्थता इत्थं इच्छाविषायतावच्छेदकरुपेण पुरुषार्थता संघटते अन्यथा बौद्धमत सिद्ध आत्मनाशादेरपि पुरुषार्थः अभ्युपगन्तव्यो भवेत्, अतएव अपरकीयं सुखमपि न पुरुषार्थः, यत अपरकीयं सुखं मे स्यात्, एवंविधा इच्छा न जायते एवं स्वीक्रियमाणायां गौरवोऽपि, यतः स्वकीयत्वाभावः परकीयत्वं एवं स्वकीयत्वाभावाभावः अपरकीयत्वम्, फलतः स्वकीयत्वापेक्षया अपरकीयत्वरुपोधर्मः गौरव ग्रस्तः। अन्वय व्यतिरेकाभ्यामपि स्वकीयत्वेनसुखेच्छायामेव पुरुषार्थतायाः प्रयोजकत्वसिद्ध्यति । परकीयसुखसाधनं यत्र स्वकीयत्वेन ज्ञायते, तत्र पुरुषार्थत्वं दृश्यते एवं अपरकीय सुखसाधने यत्र स्वकीयत्वस्य भानं न जायते तत्र पुरुषार्थत्वं नैव दृश्यते ।अपरन्च सुखसाधनेसुखेऽपि समानरुपेण इष्टता विद्यते, अतः स्वकीयत्वेन सुखसाधने पुरुषार्थतामवलोक्य सुखेऽपि स्वकीयत्वेनेव पुरुषार्थत्वस्य सहजा कल्पना भवति । दुःखे दुःख साधने च दुःखदुःखसाधनं च मे न स्यादेवं विधा स्वकीयत्वेनापुरुषार्थतानुभूयते, अतः सुखे सुख साधनेऽपि स्वकीयत्वेनेव पुरुषार्थतायाः अभ्युपगमः तर्क संगतः इति ।

अपि च यदि सुखाविगतं सादात्क्रियमाणत्वमेव हि पुरुषार्थ-स्तदा ईश्वरस्य सर्वपदार्थानां सादात्कारत्वेन जीवसुखस्यापि सादात्कारो भवति,अत: जीवसुखे ईश्वरीय पुरुषार्थत्वं भवितव्यम् ।सादैवप्रतिपादितं न्यायामृते ।

किन्च अपरकीय सुखसादात्कारो न तावत्स्वसंबद्ध : स्वस्य पुरुषार्थ: मुक्तस्य सुखसादात्कारवत्तया तं प्रत्यपि तस्यापुरुषार्थत्वापत्ते:, नापि अपरकीय सुखसादात्कार: स्वेतरा संबद्ध: ,स्वस्यपुरुषार्थ:,मुक्तस्वरुपेण सुखानुभवेनसंसारीतरासम्बद्धेन संसारिण: पुरुषार्थ प्रसङ्गात् नापि अपरकीय सुखा नुभवरुपता पुरुषार्थ: तादृशेच्छाया: क्वाप्यदर्शनात् ,तस्मादहं सुखीति स्वसमद्धन्वि सुखानुभव: स्वस्यपुरुषार्थ: , स च परमते नैतिन मोदा: पुरुषार्थ: ।

किं चायमोदा: कस्य पुरुषार्थ:अहमर्थस्य अथवा चिन्मात्रस्य अथवात्र नाघ:,पदा:समीचीन:,यत:अहमर्थरुपविशिष्टर्थस्य भवतामद्वैतिनां मते मोदो अन्वय: एव न स्वीक्रियते,अपि च चिन्मात्ररुपायां मुक्तौ मुमुदाया: स्वरुपं एवमभ्युपगन्तव्यं भविष्यति चिन्मात्रं मुक्तं स्यात् किन्तु एवंविधा इच्छा अहमर्थस्य नैव दृश्यते,अपि तु अहं मुक्तस्यांएवंविधैव इच्छानुभूयते ,किं च सुखस्य दु:खाभाव मात्रत्वे वैशेषिक मोदाव्दपुरुषार्थता अतिरेकके सजितीयत्वापत्ति: अपिचात्मन: सुखमात्रत्वे प्रकाशमात्रत्वे च सुखप्रकाशाभावेन अपुरुषार्थत्वं उभयात्म-कत्वे अखण्डार्थत्वहानि: किं च दु:खाभावस्य सुखस्य च तत्त्वतो दु:खाद्भेदे अप-सिद्धान्त: अभेदे त्वपुमर्थता । किंन्च स्वप्रकाशस्य सुखस्य स्वत: स्फुरणे अपि

दुःखाभावस्यास्फुरणादपुमर्थता अतः निर्विशेषं सुखं न पुरुषार्थः। अतः स्वप्रकाशचिदभिन्नं सुखं पुमर्थः इत्यद्वैतिमतं असमीचीनमेव ।

अपि च यदद्वैतमते तत्त्वसाक्षात्कारेण यस्य पुरुषस्याविद्या नश्यति तस्य पुरुषस्याविद्यायां निवृत्तायामपि अविद्यायाः कार्यभूतस्य देहादेः प्रतिभासो भवति एवं स पुरुषः जीवन्मुक्तः इत्युच्यते । तदप्यसंगतःएव यतः तत्त्वज्ञानेनाविद्यायां निवृत्तायां शरीरादेःसद्यःपातो भवितव्यः यतः शरीरादेः प्रपञ्चस्य उपादानभूतयाः अविद्यायाः निवृत्तत्वात्,उपादानं विना उपादेयं नैव तिष्ठति । न चाविद्या लेशानुवृत्त्या देहादिप्रतिभासः यतः अज्ञानस्य निरवयवत्वात्,एतेन अविद्यैव दग्धपटन्यायेन कञ्चित्कालं मतिष्ठतीति मतं निरस्तम् । अविद्यायाः निरवयवे दग्धपटन्यायासंभवात्,अनुवृत्तस्य ज्ञाननिवर्त्यत्वेन सत्वा पाताच्च । यदि च लेशो नामाकारः इन्द्रो मायाभिरित्यात्यादि श्रुत्या अविद्यायाः अनेकाकारत्वेन प्रपञ्चे परमार्थ सत्त्वादिभ्रम हेत्त्वाकारनिवृत्तावपि देहाद्यपरोक्षप्रतिभासहेत्त्वाकारो निवर्तते । विरोधिनि तत्त्वज्ञानेसत्यपि तदनुवृत्तिश्च आरब्ध कर्मभिर्ज्ञानप्रतिबन्धात् कर्मानुवृत्तिश्च तत्त्वज्ञानलेशानुवृत्तेःउक्तञ्च ---

अविद्यात्मेश शब्देनमोहाकारा स्तिरोक्ततः ।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः ॥

इत्यादि ।

आकारनिवृत्तावप्याकारस्यानुवृत्तिर्व्यक्तिनिवृत्तावपि जातिरिव युक्ता इति, इत्येतदप्य संगतम् । अत्र हि आकार शब्दस्य जातिरूपः अर्थः अथवा

शक्त्यादि स्वरूप धर्म अथवा सुपर्णकुण्डलादिवत् विशेषावस्था तत्र न प्रथम द्वितीय विकल्पौ संभवतः यतः तस्य देहादि भ्रमस्य उपादानत्वाभ्युपगमे अविद्यारूपं स्वीकर्तव्यं भविष्यति । एवन्च उपादानत्वानभ्युपगमे देहादिभ्रमस्योत्पत्तिरेव न संभवेत् । यतः तस्यान्यस्यस्योपादानकारणस्यासंभवात्,आत्मनःभिन्नतया देहादिभ्रमः मिथ्यात्वात् ज्ञाननिवर्त्यः,अतः देहादिप्रपन्चःअविद्यारूपो अथवा अविद्या कार्यक्यो वा सर्वथाज्ञाननिवृत्तौ उक्त देहादिभ्रमस्य स्थितिरेव असम्भवात् नापि तृतीयः पक्षः युक्तः ,यतः आकारः अविद्यायाः अवस्था विशेषः इत्यैवं स्वीकरणं नोचितम्,यतः अज्ञानस्य निवृत्तेः तस्यं अवस्थैव क्थं भवशिष्यते इति । तस्मात् परमते मोह कार्यत्वादरिपत्मस्य च ज्ञानेन मोहनाशाच्च जीवन्मुक्तिर्न युज्यतेति । अस्माकं तु मते अपरोक्ष ज्ञानिनोऽपि स्वयोग्य परमानन्द हेतु परमकाष्ठापन्न भक्त्यभावितत्साध्यमोचकस्यैश्वरप्रसादस्याभावेन प्रारब्ध कर्मणा संसारानुवृत्या जीवन्मुक्तिः भावे तु प्रसादस्यापि भावेन बिःशेषदुःखनिवृत्ति विशिष्टस्वतोनीचोच्चभावापन्नस्वरूपानन्दाविर्भावरूपमुक्तिर्युक्तेति ।

ननु मुक्तौ न तारतम्यं प्रमाणाभावात् परमं साम्यमुपैतीति श्रुतेश्च साम्यत्व प्रतिपादनात्, मुक्तेः सातिशयत्वे स्वर्गादिवदनित्यत्वापत्तिः स्यात् अधिक दर्शनेन दुःखेर्ष्यादिकं चरयादिति,चेन्न,यतः मुक्तावतारतम्यं किं तत्र भेदभोगादेरेवासत्त्वात् किं वातत्सत्त्वेऽपि साम्यात्,तत्र नाद्यः पक्षः उचितः यतःद्वा सुपर्णा[१] इत्यादिश्रुत्या भोग्यपूर्ण प्रसाधितत्वात् । द्वितीयेऽपि पक्षे इयं जिज्ञासा उदेति किं मुक्तानां जीवानां ईश्वरेणसाम्यं अथवा जीवानां

---

१- श्वे०उ० ४।६ ।।

परस्परं तत्र न प्रथमः कल्पः उचितः यतः ईश्वरे विभुत्वस्य स्वातन्त्र्यस्य च प्राधान्यंतद्विपरीतं जीवेषु अणुत्वं अङ्गत्वं पारतन्त्र्यञ्च अतः तत्र तारतम्यं निश्चितं सर्वेष्वपि जीवेषुईश्वरस्य सर्वथा साम्यं इत्येवमभ्युपगम्यमाने अनेकेश्वरः अभ्युपगन्तव्यो भवेत्, अनेकेश्वर वादे विश्वस्य व्यवस्था समाप्तामविष्यति, अपितु ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते । तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरेः ।।

इत्यादि स्मृत्या मुक्तौ तारतम्यमेव प्रतिपाद्यते ।एवं जगद्व्यापार वर्जम्[1] इत्यादि सूत्रैः तारतम्यसाधकानुभावैश्चापि अद्वैतिसम्मतस्य जीवेश्वरयोर्साम्यस्य विरोधः प्रतिपादितो भाति । नाप्यन्तिमः पक्षः, यतः सर्वेषां जीवाना परस्परं नहि साम्यं सम्भवम् , यतः समस्त जीवेषु प्रधानभूतस्मीतत्वापन्नाया एवं सर्वजीव नियामक विश्वक्सेनेनापन्नाया च इतर जीवाः निकृष्टाः भवन्ति ।सैषानन्दस्य । तेजिशतं मासानन्दाः, स एको मनुष्य गन्धर्वाणामानन्दः[2] इत्यादि श्रुतिभिः ----

मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ।।

इत्यादि स्मृति वाक्यैः वृद्धिह्रासभाक्त्वमन्तर्भावद्उभय सामञ्जस्यादेवं[3] इत्यादि सूत्रैश्च तथा कथित वक्ष्य माण श्रुतिरूप तर्कोपोद्वलित अनुमानैश्चापि सर्वजीवसाम्यस्य विरोधः प्रतिपाद्यते । एवं मुक्तौ सर्वे साम्यमभ्यु-

---

१- ब्रह्मसू० ४।४।१८ ।।
२- त०उ० २।८।१ ।।
३- ब्रह्मसू० ३।२।२० ।।

पगमे 'सालोक्य षार्ष्टि सामीप्यसारूप्यैकत्वमप्युत'[1] इत्यादि स्मृति ग्रन्थेषु 'सालोक्यस्य' अर्थात् भगवतः नित्य धाम्नि निवासस्य गार्ष्टि अर्थात् भगवतः नित्य धाम्नि निवासस्य वार्ष्टि अर्थात् भगवतः ऐश्वर्येण सम्पन्न भवनस्य सामीप्यस्य अर्थात् भगवतः ऐश्वर्येण सम्पन्नभवनस्य सामीप्यस्य अर्थात्भगवतः सन्निधे लभिस्य तथा एकत्वावाप्तिः सायुज्यादि मुक्तिषु सायुज्यस्य सालोक्यादेरपेक्षया उत्कृष्टता प्रसिद्धा ,अस्याः प्रसिद्धेः मुक्तौ तारतम्यं अस्वीकृते विरोधः स्यात् । तस्मात् श्रुत्या पूर्ववाक्येनामुक्तानां तारतम्यमुक्त्वा श्रोत्रियस्य च इत्यादिना यश्च श्रोत्रिणः इत्यादिनाच उत्तरवाक्येन युक्तस्य तदुच्यते ।अदापवन्तः इति श्रुतिस्तु तत्प्रकरणे अर्वा स्वः पोषमस्ति इत्यादिना ब्रह्मवदुत्वो कमुक्तिविषया,अपि च मुक्तसुखं परस्परं तारतम्यवत्,परस्परं तारतम्यवद्साधनसाध्यत्वात् संमतवत्,न चासिद्धिः मुक्तिः प्रयागमरणभगवद्वेषमक्त्यादिना ज्ञानकर्मसमुच्चयेन्न वासाध्येति मते प्रयागमरणादीनां वर्णाश्रम कर्मणां च विषमत्वात्,ज्ञानैक साध्येति सिद्धन्तेति कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति

'सर्वैगुणैः ब्रह्मणं ह्युपास्यानान्यदेवैकिमुसर्वैमनुष्यैरित्यादि' श्रुत्वा ब्रह्मापि यं वेद न चैव सम्यगन्ये कुतो देव मुनिन्द्र मर्त्या इदियादि स्मृत्या देवर्षि मनुष्यादिस्थमुक्ति हेतु श्रवणमननगतस्य बहुत्वाल्पतर शास्त्राश्रवणादि साध्यत्वस्य बहवल्याल्पतरब्रह्मगुण विषयकत्वं विनायोगेनार्थापत्त्याच्च तत्सिद्धेः अतः मुक्तावपि ब्रह्मादीनां तारतम्य समर्थनं भवत्येव ,अतः मुक्तौ तारतम्यमभ्युपगन्तव्यमेवेति,अतः सर्वप्रकारेण भगवतः गुणोत्कृष्टात्वादि दर्शनात् भक्त्यादिना ईश्वरः प्रसादो विधेयःयतः ईश्वर प्रसादादेव मोक्षं प्राप्नोति,अतः सर्वैरपि मोक्षकामिभिः प्रयासो विधेयःइति ।

---

१- श्रीमद्भागवत् -३।२९।१३ ।।

:o:----:o:

## उपसंहार:

श्रीमता जयतीर्थेन विदुषा द्वैतवादिना
वेदवेदाङ्गनिष्ठेन मध्वसिद्धान्तसूरिणा ॥१॥
शाङ्कराद्वैत तर्केण क्षिप्तं मध्वमतं स्वकम्
उद्धृतं प्रज्ञया पूर्णं वादावल्यां प्रमाणत: ॥२॥
भेदो विश्वस्य सत्यत्वं मायावादस्य खण्डनम्
हरेश्च सविशेषत्वं जीवस्याणुत्वमेव च ॥३॥
परोक्तयुक्तिमथनै: स्थापितं तत् स्वकं मतम्
अत्र शोधे प्रबन्धे तु विषया स्तु समीक्षिता: ॥४॥
विश्वमिथ्यात्वमानानि परोक्तानि विशेषत:
हेत्वाभासै:निरस्तानि विमृष्टानि मया तथा ॥५॥
भेदा नानाप्रमाणै स्तु साधिता:सत्यत: पुन:
ईश जीव जडानाश्च भेद: पन्चविधस्तथा ॥६॥
पारमार्थिकसत्योऽसौ माध्वै:सर्वैश्च सम्मत: ।
नवाभि र्युक्तिभिर्तत् सर्वं सरलया गिरा ॥७॥
यथामतिमया ह्यत्र गुरुयोगात् विचारितम् ।
दर्शितो मध्वसंक्षिप्तमतसारोऽस्तियत्नत: ॥ ८॥
मुक्ति विचारिता तावत् परेषामपि संमता
भेदोज्जीवन ग्रन्थस्य व्यासतीर्थकृतेरपि ॥९॥
अनुमानानि सर्वाणि विमृष्टानि दृढानि च
तेषां मत्र परेषां तु कृत: स्पष्ट: समन्वय: ॥१०॥
मायावादो निरस्तोऽत्र श्रुतिभि र्युक्तिभिस्तथा
द्वैते वेदस्य तात्पर्यं दर्शितं तत् समन्वायात् ॥११॥

तत्त्वमस्यादि वाक्यानां नाद्वैते गतिरिष्यते
तस्य त्वमिति भेदे तु तात्पर्यं समवस्थितम् ।।१२।।
मिथ्यात्वं खण्डितं युक्त्या माया चापि निराकृता
विशेषाः साधितो भेदाः स्थापिता पञ्च युक्तिभिः ।।१५।।
विष्णोः प्रसादात् जीवस्य मुमुक्षा जायते शुभा
जिज्ञासते तमेवासौ सविशेषं गुणाकरम् ।। १६।।
निर्दोषो निर्मलः शान्तः सविशेषः परोऽजडः
स्वतन्त्रः श्रीपतिर्देवः विष्णुरेकः सनातनः ।।१७।।
अनन्तःविश्वकर्तासौ अधिष्ठाता लयाश्रयः
भजनीयोऽधिमन्तव्यः साक्षात् द्रष्टव्य एव च ।।१८।।
तत्प्राप्ति साधनं चैक भक्तिर्वाद्वितीयका
भक्त्यो त्वनन्यया लभ्यः परमात्मा सनातनः ।।१९।।
श्रुतिवेद्यः हरिरसौ योगिभिर्ध्यानमागतः ।
तारतम्यं भवत्येव मुक्तौ जीवस्य सम्मतम् ।।२०।।
न चापूर्वं जहात्येव जीवो मुक्तः कदाचन
एवंमध्वमतं चेतत् पुरा वायु समीरितम् ।।२१।।
हनुमता भगवता गृहीतं श्रद्धया पुनः
श्रद्धा युक्ताय भीमाय प्रोक्तवान् मारुतिस्तथा ।।२२।।
भीमाद् पाण्डवात् प्राप्त मतमेतत् पुरातनम्
मध्वेनान्दतीर्थेन विदुषाचार्येण धीमता ।।२३।।
तेन शिष्येषु बहुषु प्रापितं महता पुनः
जयतीर्थादिभिः मुख्यैराचार्यै परमै स्तथा ।।२४।।
विस्तारितं स्थापितश्चेदं मतं माध्वं विभाति मे
एतदन्यच्च ग्रन्थेऽस्मिन् यथावदधिगम्य च ।। २५।।

श्रुतियुक्ती समाश्रिता यथासिद्धान्तसम्मतं
शोधप्रबन्धे नितरां सुस्पष्टं चिन्तितं मया ॥२६॥
देवेन्द्रदीक्षिताख्योऽहं श्यामनारायणात्मजः
गुरुनाराध्य सद्भक्त्या विष्णोः प्रसादतस्तथा ॥२७॥
वसन् काश्यां प्रसन्नात्मा श्रमयत्नपुरःसरम्
शोधप्रबन्धं माध्वीयं व्यलिखं विदुषां मुदे ॥२८॥
भूयाद्सौ भगवतोः भवानी विश्वनाथयोः
अर्पितश्चरणाब्जेषु प्रसादाय वराय च ॥२९॥

:o:-----:o:

# परिशिष्टम्

## सहायक ग्रन्थानां सूची


१- वादावली , वसन्ताप्रेस अडियार ,मद्रास

२- भेदोज्जीवनम् ,

३- न्यायामृताद्वैतसिद्धि: , उदासीन संस्कृत विद्यालय,वाराणसी

४- तत्त्वप्रदीपिका ,उदासीन संस्कृत विद्यालय,वाराणसी

५- पञ्चदशी ,माधवप्रसाद भार्गव पुस्तकालय,गयाघाट

६- श्रीभाष्यम्,श्रुतप्रकाशिकासहिता, श्रीवत्सप्रेस,मद्रास

७- न्यायसिद्धान्त मुक्तावली,दिनकरी,रामरुद्री,सहिता चौखम्बा,वाराणसी

८- अद्वैतसिद्धि: लघुचन्द्रिका सहितम्,उदासीन संस्कृत विद्यालय,वाराणसी

९- ऐतरेयोपनिषद्,गीताप्रेस गोरखपुर

१०- कठोपनिषद् ,गीताप्रेस गोरखपुर

११- मुण्डकोपनिषद् ,गीताप्रेस गोरखपुर

१२- ईशावास्योपनिषद्,गीताप्रेस गोरखपुर

१३- सर्वदर्शनसंग्रह: ,चौखम्बा संस्कृत सीरीज ,आफिस,वाराणसी

१४- ब्रह्मसूत्रशाङ्करभाष्यम्,भामत्यादि टीकानवकोपेतम्,कलकत्ता

१५- वेदान्तसार:

१६- किरणावली -वाराणसेय संस्कृत विश्वविद्यालय,वाराणसी

१७- ब्रह्मसूत्रमध्वभाष्यम्

१८- केनोपनिषद् -मोतीलाल बनारसी दास,वाराणसी

१९- छान्दोग्योपनिषद् आनन्द आश्रम पूना

२०- भारतीय दर्शन चौखम्भा ओरियन्टालिया

२१- वेदान्तपरिभाषा, खेमराज कृष्णदास, बम्बई
२२- श्रीमद्भगवद्गीता गीताप्रेस, गोरखपुर
२३- सांख्यकारिका -माठर वृत्ति-चौ०सं०सी०, वाराणसी-२
२४- सिद्धान्तलेशसंग्रह: - अच्युत ग्रन्थमाला, वाराणसी
२५- सिद्धान्तकौमुदी - खेमराज कृष्णदास
२६- सांख्यतत्त्व कौमुदी - दुण्डिराजशास्त्री, वाराणसी
२७- सारस्वती सुषमा -मासिकपत्रिका संस्कृत विश्वविद्यालय, वाराणसी
२८- श्रीमद्भागवत

:o:--------:o:

